# अथ गागाभट्टकृत कायस्थपद्धति प्रारंभः

हा ग्रंथ फार दुर्मिळ असून श्रीमंत राजश्री सदाशिवराव देवाजी दादासाहेब दिघे मुक्काम बडोदें यांणीं संपादन केला तो त्यांच्या आ ज्ञेवरून यथामत उतरून छापून प्रसिद्ध केला आहे. यांतील अनुक्रमणिका

श्रीगणेशायनमः श्रीसरस्वत्यैनमः श्रीगुरुभ्योनमः श्रीसीतारामचंद्राभ्यांनमः अथ गागाभट्टी लिख्यते हरिः
ॐ नत्वाभीरकिशोरंचोरंविद्युद्दंबुदप्रख्यं कायस्थधर्मदीपंगागाभट्टस्तनोतिलीलातः १ गागाभट्टपराख्यस्यविश्वे
श्वरमनीषिणः कृतमनोमानसेशर्ममम निर्मातुसन्मतिः २ तदुपोद्घाततस्त्वेनजातीनीर्णयः क्रियतेतत्रचातुर्वर्ण्यप्रयोजकमाह
महायाज्ञवल्क्यः सवर्णेभ्यः सवर्णासुजायंतेहिसजातयः अनिंद्येषुविवाहेषुपुत्राःसंतानवर्धनाः ४ सवर्णेभ्योब्राह्मणा
दिभ्यः सवर्णासुब्राह्मण्यादिषु विवाहेषुसत्सुजाताःपुत्राःसंतानवर्धनाःसजातयः मातृपितृसमानजातीयाभवंतीत्यर्थः अत्र
वर्णत्वंब्राह्मणत्वादिजातिचतुष्कान्यतमत्वं जातिचतुष्कव्यापकजात्यंतरंवा चातुर्वर्ण्यादिभेदेक्यमात्वरेदित्यादिप्रयोगात्
तेनविप्रायांब्राह्मण्यांवेत्तुर्ब्राह्मणादुत्पन्नत्वमेवब्राह्मणत्वप्रयोजकं एवंक्षत्रियादावपि. एवंचविप्रासामसवर्णायामुत्पन्ने मूर्धा
वसिक्तादौसवर्णायामविप्रायामुत्पन्नेकुंडगोलकेक्षेत्रजादौअसवर्णायामविप्रायांचोत्पन्नेप्रतिलोमजादौब्राह्मणत्वाद्यभावः
कथंतर्हिसृष्ट्यादिब्राह्मणेविश्वामित्रेदेवरोत्पन्नेचब्राह्मणत्वमितिचेत्तत्रऊचुः ब्राह्मणत्वजातिर्भेदचतुष्टयमिन्नाकचिदीश्वर
मुखजन्यतावच्छेदिकासृष्ट्यादिब्राह्मणे कर्मजन्यतावदवच्छेदिकाविश्वामित्रे ऊढायांब्राह्मण्यांवोढुर्ब्राह्मणजन्यतावच्छेदिका
सर्वेषुब्राह्मणेषुदेवरोत्पन्नेतुशास्त्रबोध्यमिति योगीश्वरेतु देवरोत्पन्नेप्यूढायांवोढ्रुत्पन्नत्वमेवब्राह्मण्यं तत्रापिदेवरःपुत्रका

भ्यया घृताभ्यक्तः कृतावदित्युक्त्वा यस्य म्रीयेत कन्याया वाचा सत्ये कृते पतिः तामनेन विधानेन निजो विंदेत देवरः इति वाक्येन वि
धानेन विंदेतेति पूर्ववाक्योक्त घृताभ्यक्तत्वाविशिष्ट वेदनरूप विलक्षण विवाहस्योक्तत्वात् एवंच तत्रापि विलक्षणविवाहसत्वे
नवोद्भूतपन्नत्वमव्याहतं श्राद्धे कुंडगोलकनिषेधोप्येतद्विषय एव संगच्छते नच तत्र कुंडत्वासंभवः म्रीयेतैतस्य महारोगाद्युप
लक्षणत्वात् कुंडत्वादिकं तु न जातिः येन ब्राह्मणत्वादिना संकरः स्यात् किंतु मृतपतिकस्त्रीजारोत्पन्नत्वाद्रिरूप उपाधिः अतादृ
श देवरोत्पन्ने तु व्यभिचारजत्वेन न ब्राह्मण्यं अत एव वाग्दानोत्तर विवाहस्य युगांतर विषयत्वात् देवरोत्पन्नब्राह्मणो युगांतर विष
य एवेति एतेन श्राद्धे कुंडगोलकनिषेधो भ्रमप्रयुक्तिविषय इति वदन् विज्ञानेश्वरो न विकथनीयः एवं ज्ञात्युत्कर्षवति कर्मोत्क
र्षवति च ब्राह्मणे ब्राह्मणत्वभेदो बोध्यः जात्युत्कर्षो युगे ज्ञेयः पंचमे सप्तमेपि वा व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तर मिति या-
ज्ञवल्क्यात् एवं क्षत्रियत्वादिकमपि बोध्यं नच स्त्रीष्वनंतरजातासु द्विजैरुत्पादितान्सुतान् सदृशानेव तानाहुर्मातृदोष
विवर्जितान् इति वचनेन मातुः सदृशानित्यर्थः तेन मूर्धावसिक्तादीनां मातृजातीयत्व बोधनात्कथं तत्र ब्राह्मणत्वादि जात्यभा
वः इति वाच्यं मातृधर्मप्राप्तिमात्र बोधनेवच सत्तात्पर्यात् नचैवं पांडवे क्षत्रियत्वं न स्यात् नस्याच्च योनिजेषु वसिष्ठादिषु-
ब्राह्मण्यमिति वाच्यं इष्टापत्तेः षट्कर्मप्रयोजकीभूता दृष्टविशेषवचनब्राह्मणादिपदप्रयोगसंभवान्न च वाच्यं ब्राह्मणानंत्र

त्विजोणीते पुत्रिकां पुत्रपरगोत्रजसहोढकानिनानुजावरद्विप्रवंरान्परिहार्येति बौधायन निषेधानुपपत्त्याश्चात्येचकुंडगोल
कादिनिषेधानुपपत्तेरितितेषां नित्यानुवादत्वात् नांतरिक्षेनदिवीतिवत् एतच्चसर्वमभिसंधायाह मनुः सर्ववर्णेषु तुल्यासु
पत्नीष्वक्षतयोनिषु आनुलोम्येनसंभूताजात्याज्ञेयास्तएवत इतिदेवलोपि ब्राह्मण्यांब्राह्मणाज्जातः संस्कृतोब्राह्मणोभवे
त् एवंक्षत्रियविट्शूद्रा ज्ञेयाःस्वेभ्यः स्वयोनिजा इति इदमपियाज्ञवल्क्य मनुभ्यामुपसंहाराद्विप्र परं अतएवसंस्कृतप
दमुच्चार्यं अतोमूर्धावसिक्तादौकुंडगोलकादौच ब्राह्मण्यं वर्णत्वंच नास्तीति निष्प्रत्यूहं अतएवतेषुन वर्णधर्मप्राप्तिः किंत्वाश्रमा
दिधर्मप्राप्तिः तथाचयमः असवर्णासु नारीषु द्विजैरुत्पादिताश्चये परपत्नीषु सर्वासु कुंडास्ते गोलकाः स्मृताः अविवाह्याःसु
ताश्चैषां बंधुभ्यः पितृमातृतइति अतएव कृच्छ्रं सांतपनं कुर्या दत्वा संकीर्णयोनिजा मितियमोक्तं प्रायश्चित्ताल्पत्वमप्युपप
न्नमितिदिक् असवर्णोत्पन्ना द्वादशभेदाः अनुलोमषट्क प्रतिलोमषट्क भेदात् तथाचमनुः विप्रान्मूर्धावसिक्तस्तु क्षत्रिया
यांविप्रास्त्रियां जातींबष्टश्चशूद्रायां निषादः पारशवोपिच माहिष्योग्रौ प्रजायेते विट्शूद्रायनयोर्नृपात् शूद्रायांकरणोवैश्याद्विन्ना
स्वेषविधिः स्मृत इति अनुलोमषट्कं ब्राह्मण्यांक्षत्रियात्सूतो वैश्याद्वैदेहिकः स्मृतः शूद्राज्जातस्तु चांडालः सर्वधर्मबहिष्कृ-
तः क्षत्रियायां मागधं वैश्या च्छूद्रात्क्षत्तारमेवच शूद्रादायोगवं वैश्याज्जनयामास धैस्कतं इति प्रतिलोमषट्कं अथ तेषांक

गा॰प्र॰ र्णाणि विध्यं भरूवास्कशाखे क्षात्रेय्यां विप्रसंयोगाज्जातो मूर्धावसिक्तकः राजन्यः क्षत्रधर्मेणाभ्यधिकः संप्रकीर्त्तितः एत
३ स्यचाग्निहोत्रस्य दर्शपौर्णमासज्योतिष्टोमादावप्यधिकारः उभौ वर्णौ ब्रह्मविरुग्रः उग्रोषेति लिंगात् अत एव त्वार्ह द्विराधि प॰प्र॰
करणेपी वर्त्तोब्रह्मसामेति सामान्यवचसो मूर्धावसिक्तादिकर्तृकप्रयोगविषयत्वं राणककारेणोक्तं वैश्यस्त्री द्विजसंभूतों
बष्ठः स्यादनुलोमतः अन्येभ्यो वैश्यजातिभ्यः षट्कर्मस्वधिकः स्मृतः षट्कर्मान्तःपातिकर्मत्रय इत्यर्थः नरवाजिगजानां १
च विचिकित्सा स्यजीविका द्विजोत्र ब्राह्मणः अयमंबष्ठो गौडप्रसिद्धोंबष्ठार्थीनः शूद्रां शयनमारोप्य ब्राह्मणश्च कथंचन
जनयेद्ग्रामधर्मेण्यं तस्यां पाराशवं सुतं महाशूद्र इति ख्यातः शूद्रेभ्यः किंचिदुत्तमः स्वर्गकारस्य तस्येह स्नानं धौत्रं पवित्रकं
शौनं शूद्रस्य धर्मेण वर्त्तनं तस्य च स्मृतं शयनारोपणं विवाहः एतस्यैव संज्ञान्तरं निषादः अस्य कर्म स्वधिकारः याज्ञे यास्क
पंचजनाम होत्रं जुषध्वमिति मंत्रलिंगात् आदितियौशितिक्रमव्याख्याने पंचजनपदस्य चत्वारो वर्णा निषादः पंचम इत्यौपम
न्यव इति यास्केन निषादस्य गणनात् एवंच यस्कशूद्रस्येति व्रतद्रव्यनियमोपि संगच्छते वैश्यायां क्षत्रियाज्जातो माहि
ष्यस्त्वनुलोमतः अष्टाधिकारनिरतश्चतुःषष्ट्यंगकोविदः व्रतबंधादिकास्तस्य क्रियाः स्युः सकला विशः ज्योतिषं शाकुनं
शास्त्रं स्वरशास्त्रं च जीविका अष्टाधिकाराः स्रग्गंधवनितावस्त्रं गीतताम्बूलभोजनं शय्या च कुसुमं चैव भोगाष्टकमुदाहृत ३

मिति भोगाष्टकं चतुःषष्ठ्यंगानि चतुःषष्टिकलास्ताश्च वेदांगागमशास्त्रवित्त्वकवितावक्तृत्वतौर्यत्रिकद्यूतास्त्राद्भुत
वाद्सूपरचनाश्चित्रंपणोवैद्यकं नानारत्नपुरादिलेखपुरुषस्त्रीधातुभाषालिपिप्रज्ञानाटककेलिदंतितुरगप्रेक्षाच सामु-
द्रिकं शय्याभोजनयुद्धमर्दनविभूषाबंधसेवेंगितज्ञानं राजतरां सभार्तं रतकृतिः सौख्येषुभोगेषुधीः प्राणचारिविषाग्निना
रिषुरथाखेटांगशीर्षेषुयद्दुर्गाराम्यकृतिः पशुद्विपचमत्कारः शिकार्चादयइति अधिकाराःवृत्तयइत्यर्थः शूद्रायांक्षत्रियादुग्रः
क्रूरकर्माप्रजायते शस्त्रास्त्राभ्यासकुशलःसंग्रामकुशलोभवेत् तथावृत्त्यासजीवेत्सच्छूद्रधर्मान्वजायते अयंचरजपूतइ
तिभाषाप्रसिद्धः वैश्यांधर्मेणशूद्रायांजातोवैतालिकाभिधः चारणोसावपिभवेन्न्यूनोवृषलधर्मतः राज्ञांचब्राह्मणानांच
कैरविनोत्पन्नानांनानुलोमत्वंकिंतु व्यभिचारोत्पन्नत्वेनकुंडगोलकान्यतरत्वमिति इत्यनुलोमषट्कर्माणि अनेनैवप्रकारे
णोत्पन्नानांस्त्रीणामनुलोमजानानामिमान्येवषट्नामानिकर्माणि यथा मूर्धावसिक्ताः अंबष्ठाः निषादाः पारसवाः माहि
ष्याः उग्राः करणाइति अथप्रतिलोमषट्कर्माणिविश्वंभरवास्तुशास्त्रे ब्राह्मण्यांक्षत्रियात्सूतःप्रतिलोमेनजायते क्षत्रियाणा
मसौधर्मकर्तुमर्हत्यशेषतः किंचि क्षत्रियजातिभ्योन्यूनतातस्यविद्यते गजबंधनमश्वानांवाहनंकर्मसारथेः वैश्यधर्मेणसू

तस्यनाधिकारः कश्चिद्भवेत् क्षत्रियाणांधर्मेषुह्मप्रजापालनादिवृत्तिः नतुवेदाध्ययनादिः प्रतिलोमाधर्मधर्महीना इतिस्मर
णात् ब्राह्मण्यांजायतेवैश्याद्योसौवैदेहिकाभिधः शुध्धांतरक्षणंकुर्याद्राज्ञामनुपसंहितः सामान्यवद्भिंनापोष्यतासांचोक्ता
वजीविका तस्योक्तशूद्रधर्माणांनाधिकारोस्तिकर्हिचित् पण्यांगनानांराज्ञांच कुर्यात्संगंतदिच्छया रूपाजीवान्कृतांस्तेषां
निशियः संगतोविटः सएवतासांप्राणेशोनान्यःकांतोपितत्पतिः चतुःषष्टिकलाःकामशास्त्रंतदुपजीवनं ब्राह्मण्यांशूद्रवीर्येण-
जातश्चांडालसंज्ञिकः सर्वेषामेवतत्स्पर्शात्सचैलस्नानमुच्यते सवसेन्नगराद्बाह्यःसर्वधर्मबहिष्कृतः येवध्यास्तेनतेवध्याःवि
विधैर्यातनाशतैः तेषांवस्त्राद्यलंकाराजीविकातस्यचस्मृता क्षत्रियामागधंवैश्याज्जनयामासवैस्फुतं सबंदीजनइत्युक्तोव्रत-
बंधादिवर्जितः शूद्रेभ्योप्यधिकःकिंचित्तस्यजीवनमुच्यते कथालंकारगद्यादिषट्भाषास्वविशारदः गद्यपद्यादिचित्राणिवि
रूढानिमहीभुजां भाटइतिभाषाप्रसिद्धः क्षत्रिणीशूद्रसंयोगात्क्षत्तारंजनयेत्स्फुतं निषादइतिविख्यातः सर्ववर्णबहिष्कृ
तः शूद्राचारविहीनश्चपापधीनिरतःसदा वागुरापाशपाणिस्तुमृगबंधनकोविदः आरण्यपशुजातीनामंतकश्चवनेचरः क्रो
धान्वितोमांसवृत्त्या तयाजीवेत्सदैवहि : घंटापापर्धिकंकुर्याद्रात्रौविस्मयकारिणिम् द्विधापापधीरस्योक्ताव्योमभूचारिणी
मिह विक्रयंमधुनःकृत्वाधनमिच्छेत्स्ववृत्तये पारधीइतिमहाराष्ट्रभाषया करवलइतिमध्यदेशभाषयाप्रसिद्धः वैश्य

स्त्रीशूद्रसंयोगाद्यायोवाचकसंज्ञक , सशूद्राद्दीयतेधर्मेपापायतत्कर्मकृत सत्कुर्यात्कुट्टिमाभूमिंचूर्णेनास्येहजीवनं इति
प्रतिलोमषट्ककर्माणि अनेनैवप्रकारे· णोत्पन्नानांप्रतिलोमजानांस्त्रीणामिमान्येवनामानिकर्माणिच यथा सूता वैदेही
चांडाळी मागधी क्षत्ता अयोगवी विश्वंभरवास्तुशास्त्रे · विप्रःसंस्कारहीनश्चव्रात्यतामभिगच्छति ब्राह्मण्यांतस्ययः पु-
त्रोभृज्जुकंठःसहिस्मृतः ब्राह्मण्यांभृज्जुकंठाच्च स्तस्त्वावर्त्तकोभवेत् ब्राह्मण्यावर्त्तकाभ्यांयः पुत्रः सकट धानकः ब्राह्मण्यां
कटधानेनसुतोसौपुष्पशेखरः· भृज्जुकंठादयःप्रोक्ताश्चत्वारः पूर्वतःक्रमात् तेषांकर्माणिवृत्त्यैहजीवनायविशेषतः वर्ण्यैह.
रिहरौतैश्चगीतगाथाप्रबंधकैः चरितैर्देशभाषाभिर्गानंतज्जीविकास्मृता· २० लोकाचाराःस्मृतास्तेषांशूद्रधर्मानहिकचि
त् एतेचनानुलोमजातप्रतिलोमजाः अपितुब्राह्मणाएव मद्यपीपतितब्राह्मणवत् दुर्ब्राह्मणव्यभिचारजाइतिसंप्रदा
यः विप्रः स्वीकृत्यसंन्यासमारूढपतितोभवेत् ब्राह्मणींकारयेद्दंडांयंतस्यांननयेत्सुतं सदोळःकर्मचांडाळोतत्स्पर्शात्
पातकंमहत्. वापीकूपतडागानांप्रवाहानांचसर्वशः खननंजीवितार्थायतस्यप्रोक्तंविशेषतः ओडरीइतिभाषाप्रसि
द्धः तथा शूद्रायाक्षत्रिणीसूतेव्रात्यक्षत्रियमैथुनात् पुत्रःसजलइत्युक्तःशूद्रधर्मविधायकः सकुर्याद्राजपुत्रांश्चशास्त्रा
स्त्रकुशलान्नरान् तेभ्योलब्धासवृत्त्यर्थंस्वधर्ममनुपालयेत् क्षत्रिणीमल्लसंयोगाज्जातोमल्लाभिधःपर लब्धासावरणस्य

द्बलदर्पेणगर्विता राज्ञांकौतुकमुत्पाद्यनियुद्धेनधनार्जनं कुर्यात्स्ववृत्तिनिपुणःशूद्रधर्माम्मशेषतः क्षत्रिणीमल्लुसंयो
गाच्छिलींध्रइतिजायते सहीनःशूद्रधर्मेभ्योजीविकास्यांगमर्दनं नापितभेदोमर्दनीतिभाषाप्रसिद्धः शिलींध्रःक्षत्रि
णींगच्छन्जनयेन्नटसंज्ञकः हीनोसौशूद्रधर्मेभ्योनाटकानिसमभ्यसेत् कोल्हारिकःसएवेक्तोबहुरूपाणिविभ्रुतः अ
त्रापिदुष्टक्षत्रियत्वमेवनत्वलोमजाइत्यादि शूद्रकर्मासमुत्पन्नोब्राह्मणेननसंस्कृतः अपरोनापितःप्रोक्तःशूद्रधर्माधिकोपि-
सः अत्रापिदुष्टशूद्रत्वंअतएवाधिकइतिविशेषः इतिसंक्षेपः अथावान्तरभेदाः माहिष्यस्त्रीब्राह्मणेनसंगताजनयेत्सु
तं अभीरपत्न्यामाभीरमितितंविधिरब्रवीत् तेषांसंयोवसेद्घोषेबहुशष्पजलाकुले अर्जितंगोमहिष्यादिपोषयेत्तृण
वारिणा दुग्धंदधिघृतंतक्रंविक्रीणीतेधनंजय शूद्रेभ्योन्यूनताधर्मेतस्यसर्वस्यविश्रुता अत्रमाहिष्यायांवैश्यस्त्रियांक्षत्रि
यजातत्वेनानुलोमत्वात् तस्याब्राह्मणादुत्पन्नत्वेनाभीरोप्यनुलोमः शूद्राक्षत्रिययोर्जातावनितायाभिधानिका ब्राह्मणो
जनयेत्पुत्रमावृत्तंकुम्भकारकं सशूद्राद्धीयतेधर्मेघटयेन्मृन्मयान्घटान् अयमप्यनुलोमः वैश्यस्त्रीद्विजसंभूताकु-
न्यांबष्ठाभिधानिका सांबष्ठाद्विजाश्लिष्टाजनयेत्तनयंरहः सकांसारइतिख्यातः सततंकालिकांयजेत् कांस्यपात्राणि
चित्राणिरचयेज्जीवनायच शूद्रधर्मेणसर्वत्रस्थितिरस्यविधीयते द्विजाश्लिष्टाब्राह्मणाश्लिष्टेत्यर्थः अयंकांसारोप्यनुलो

मः द्विजशूद्रासमायोगान्निषादीव प्रिनाभवेत् निषादी द्विजतः सूतेतनयान्मौष्टिकाभिधान् तेदोलावाहकाराज्ञां विशेषा
द्रुतगामिभिः छारालावाहकास्तेस्युःकावडीवाहकामताः विक्रयश्चैंधनानांच तेषांधर्मोनकश्चन अयंमप्यनुलोमः ब्राह्मण्यां
वैश्यजनितावैदेहीतिनिगद्यते सासंगताब्राह्मणेनछत्रयंजनयेत्स्फुतं सस्याच्छत्रधरोराज्ञांलोकेवाहीतिकथ्यते समस्तेषु
चवर्णेषुकुर्यात्पानीयविक्रियां तस्यैवंजीविकाप्रोक्ताशूद्रधर्मानहिकश्चित् वैदेह्याःप्रतिलोमत्वादयंप्रतिलोमजइतिके
चित् तस्याःप्रतिलोमत्वेपिब्राह्मणजन्यत्वादनुलोमइत्यन्ये वैश्यस्त्रीशूद्रसंयोगाज्जातायोगविकाभिधा अयोगवीब्राह्म
णाभ्यां धिवणस्यसमुद्भवः सचर्मणाश्वपर्याणंयद्यार्शोभंप्रकल्पयेत् अश्वानांपारस्वः सोपिकर्त्तुश्चित्तास्तथाहेद्वि न
द्रव्यंजीविकातस्यविहितालोकविश्रुता अयंप्रोच्चीतिप्रसिद्धः शूद्राक्षत्रिययोःपारसवीसंज्ञातुजायते सासूतेक्षत्रिया
त्पुत्रंविंध्यात्तंताम्रकुट्टनं संसर्गसहकासारैःकुर्यात्सतुविशेषतः घटनंताम्रपात्राणांतत्पर्यावर्त्तजीवनं योमागधीक्षत्रि
ययोर्जातःश्चो- लूकसंज्ञकः सलोहकर्मास्यविश्रुतं तेषांतुगुणसंयोगंराज्ञांशस्त्रविधायकः अयमनुलोमः वैश्यवीर्येण
शूद्रायांजातासाकरणीस्मृता करणीवैश्यसंयोगाज्जातोवत्सासंज्ञकः हीनःसशूद्रधर्मेभ्यः शाड्वलंगोश्चपालयेत् अय
मनुलोमः माहिष्येणकरण्यांतुरथकारःप्रजायते नैवोपनयनंतस्यशूद्रधर्माद्वहिः कश्चित कर्मनंशिल्पंवत्पात्रंलोकेशिल्प

स्त्रशास्त्रवित् अयमनुलोमः एतस्यैव रथकाराधानेधिकार इति मंत्रलिंगात् सामानाधिकरण्येन सौधन्वनाख्य-
क्रतुविशेषस्यैवाधिकार इत्याहुः माहिष्यवनितासूनुं वैदेह्यः प्रसूयते स कायस्थ इति प्रोक्तः तस्य कर्म विधीयते लि
पीनां देशजातानां लेखनं स समाचरेत् गणकत्वं विचित्रं च बीजपाठी त्रिभेदतः कुर्यात्तथा वर्त्तनं स्यात्कायस्थस्य विशेषतः
अधमः शूद्रजातीभ्यः पंचसंस्कारवानसौ अयं प्रतिलोमः पंचसंस्काराजातकर्मतथानाम वपनं कर्णवेधनं उद्वाहाश्चैव विज्ञे
याः कायस्थे पंचसंस्क्रियाः इति छागलेयोक्ताः पद्मपुराणे रेणुकामहात्म्ये तु कायस्थास्त्रिविधाः चित्रगुप्ताश्चांद्रसेनीया
संकरजाश्च तत्र चित्रगुप्तः सागरमंथनकाले कालीशरीरोत्पन्नः तस्य च दाक्षायिण्यां विचित्रगुप्तः सुतोजज्ञे तस्या-
पि मनुकन्यायां धर्मगुप्तो नाम पुत्रः सोपि गंधर्वकन्यायां रुद्रगुप्तनामानं तस्य च पुत्रचतुष्टयमासीत् तेच माथुर गौड नागर
नैगमाः इति प्रसिद्धाः जामदग्न्यकर्तृकक्षत्रियवधकाले चंद्रसेनस्य राज्ञो भार्यायाः सगर्भायाः दाल्भ्याश्रमं गतायाः
गर्भवधार्थमागतस्य जामदग्न्यस्य दाल्भ्यमुनिप्रार्थितस्य शापेन क्षत्रियत्वमुत्सृज्य कायस्थत्वं प्राप्तस्य संततिः साच द
क्षिणदेशे प्रभुनामकत्वेन प्रसिद्धा संकरजातास्तूक्ता एवा विशिष्य तेचेदमुपरिष्टात् वैश्यक्षत्रिययोर्जातो माहिष्य इति
गोपतौ माहिष्योहि निषादस्त्रीसंगमाज्जनयेत्सुतं माळाकारमसौ लोके माळाकारः प्रकीर्त्तितः कुसुमानि सशाखानि

वर्धयेत्धनलब्धये सहीनःशूद्रधर्मेभ्यः संस्कारेगुप्तकेप्रभुः ब्राह्मण्यांजायते वैश्याद्योसौवै देहिकाभिधः सोंबष्ठाज्जन
येत्पुत्रं वैदेहाह्वेनसंज्ञितः सशूद्रधर्मरहितोभ्यसनाद्यं सलाघवं जीविकातस्यकथिता हारिमेखळलेखनं अयंप्रतिलो
मः वैश्याक्षत्रियेसंयोगान्माहिष्याज्जायतेस्फुता क्षत्रिणीवैश्यसंयोगाज्जातोसौ मागधाभिधः माहिष्यांमागधाच्चैवशु
र्धमार्दकसंज्ञिकं जनयेत्तत्रयं सोपिशूद्रधर्मविनाकृतः गीतंचतुर्विधंवाद्यमभ्यसेज्जीवनायच अयंप्रतिलोमामृदंगवा
द्यकारः शूद्रादयोगवीजाताःवैश्यकन्यासमुद्भवाः अयोगवीसासैरंध्रं कायस्थाज्जनयेत्स्फुतं सहीनःशूद्रजातीभ्यः सेवांकुर्या
द्द्विजातिषु पादयोः क्षाल्नंतेषां धम्मिल्लानांप्रसाधनं अभ्यंगंमर्दनंचैव चंदनेनानुलेपनं मृगनाभेश्चवंद्रयोगंशृंगार रचनं
नवं जीविकातस्यसंप्रोक्ता स्त्रीत्वंसैरंध्रिकोस्मृता प्रसाधनेपिचतुरासैरंध्रीतिप्रकीर्तिता अनुलोमेषुजन्यत्वादयमनुलोमः
विप्राच्छूद्रां समुत्पन्नोनरः पारसवाभिधः सएवस्मन्निषादोत्र लोकेव्यापारविश्रुतः उग्राच्छूद्र्यांसमुत्पन्नाक्षत्रियादेवला-
भिधा सोग्मानिषादसंयोगाच्चाधिकंजनयेत्स्फुतं सशूद्रधर्मरहितोद्विजानांखलहारकः देशाद्देशांतरंगच्छेच्छीघ्रंचरण
वेगतः अयमनुलोम एव इति मध्येदेशभाषाप्रसिद्धः क्षत्रिणीशूद्रसंयोगात्क्षत्तारंजनयेत्स्फुतं उग्रोच्छूद्र्यांसमुत्पन्नः क्ष
त्रियादेव केवलात् क्षत्तुरुग्राचजनयेत्क्षेमकंतनयंक्षितौ सहीनःशूद्रधर्मेभ्यो द्वारस्थास्यजीवनं अयंप्रतिलोमो दरवाण

इतिभाषाप्रसिद्धः ब्राह्मण्यांवैश्यजनिताज्जाता वैदेहिकामता । विप्राद्वैश्यांगनाजातोंबष्ठ इत्यभिधीयते सावैदेहीसचांब
ष्ठस्तयोजातः कुशीलकः नृत्यकर्त्ता संगीतज्ञो देशाद्देशांतरंव्रजेत् सास्य वार्त्तात्र कथिता चारणस्य स्वयंभुवा अयमनुलोमः
शैवाःपाशुपताश्चैव योगधर्मपरायणाः आरूढपतितास्तेस्युः शूद्राःपण्यांगनारताः तेभ्यस्ताभ्यश्च संभूतो भस्माकर इती
रितः सजटाभस्मधारीच शिवलिंगंप्रपूजयेत् तांबूलभक्षतांद्रव्यं गावःक्षेत्राणि शाकिनी शिवाय प्राणिभिर्दत्तमन्यत्कि
मपिभक्षितः दंडीशांतदितिख्यातं तेनतस्येहजीवनं आरूढपतिताः शूद्राः शूद्रोपीत्यर्थः अयमनुलोमोगुरवइतिम
हाराष्ट्रभाषाप्रसिद्धः शूद्रादायोगवीजाता वैश्यायामितिविश्रुता ब्राह्मण्यांवैश्यजनितः सवैदेहिकः स्मृतः आयोगवी
सावैदेहान्मैत्रेयंजनयेत्सुतं स्यादुषःसमये नित्यंघंटावादनतत्परः प्रबोधंनागराणांच कुर्यान्मंगलगायकः ललितांभैर-
वींगायन्धनंसातस्यजीविका अयंप्रतिलोमः टाकणकार इति महाराष्ट्रभाषाप्रसिद्धः ब्राह्मण्यांक्षत्रियात्सूतःसंजात
इतिकीर्त्तितः ब्राह्मण्यामपिवैदेही वैश्याज्जातेतिकीर्त्तिता वैदेहीसूतसंयोगात्स्रुतंसूतेस्रुतः स्रुतः लेह्यादीनांचतुर्णां
चपाकंकुर्याद्यथाविधि आतानामतुयोगेन मांसस्रावकभेदतः रसैः स्वाद्वम्ललवणतिक्तोषणकषायकैः वातपित्तकफा
दीनांक्षयोपचयकारकैः शूद्रधर्मानधिकृतः सूपशास्त्रविशारदः पार्वतीनलभीमानां मतेषुपरिनिष्ठितः अयंप्रतिलोमः

सूपकारः क्षत्रिणीवैश्यसंयोगाज्जाता मागधिकातुसा वैश्यशूद्रासमायोगाद्भवेदायोगवाभिधः मागधायोगवाभ्यांचष्म
त्कुशइतिजायते सवर्णबाह्योधर्मेषुसम्यक्संगीतकोविदः कांतानांनृत्यशालासुनित्यंलास्यंचशिक्षयेत् अयमनुलोमः
कायस्थजातेर्वनितांमालाकारोपिकामयेत् तस्यांयोग्राम्यधर्मेणजायतेशिकिलीकरः शराणांकंकपत्रैश्च रचनात्तस्यजीवि
का अयंप्रतिलोमः शिकिलीकारइतिमध्यदेशभाषाप्रसिद्धः क्षत्रिणीतनयावैश्याज्जनयामासनंदिनी सानंदिनीद्विजा
त्सूतेतनयंपंगुसंज्ञकं. सपंगुःकुंभकारस्यमहिषींयदिकामयेत् तस्यांचजनयेत्पुत्रंसभवेच्छाम्ललाभिधः सहीनःशूद्रधर्मे
भ्यःपर्णवल्लीविधायकः तांबूलवल्लीसंभूतंद्रव्यंतस्येहजीवनं अयमनुलोमस्तांबूलीइतिमध्यदेशभाषाप्रसिद्धः ब्राह्म
ण्यांवैश्यजनितोयोसौसौदेहकाभिधः तस्यशूद्रांगनासूनुजनिस्त्वंधासिधाभिधः कुर्यादन्नानिचत्वारिशिवि क्रयार्थंससं
ततं अन्नविक्रयतोलब्धंतत्धनंतस्यजीवनं अयंप्रतिलोमोभटिहारइतिभाषाप्रसिद्धः कटधानःसमंगुनांकामतोयदिग-
च्छति तयोर्योजायतेपुत्रःसचच्छायलिसंज्ञिकः सहीनःशूद्रजातिभ्यःछागलोनामकुत्त्वसः छागलेभ्योधनंजातंतस्यत
ज्जीवनंस्मृतं अयंप्रतिलोमोगडरीयाइतिमध्यदेशभाषायांप्रसिद्धः मंकुसैरंध्रयोर्ज्जातःशय्यापालकुसंज्ञकः तंचापि
सक्तंराजाशय्याकर्मणियोजयेत् अयंप्रतिलोमः कर्मचांडालवनितापुष्पशेखरसंज्ञिता जनमेघस्तनंसोपिरव्यातोमंड

लखाभिधः युगलंशुनकानांसं धर्त्तुयोज्यो महीभुजा· आखेटकपणेभ्यश्च भुनांजीवन्नमुच्यते अयंप्रतिलोमः बंदिनीशूद्र
संयोगाज्जातःसंदोलकाभिदः चतुर्धर्मविहीनस्यमंजिष्ठारंगकारकः तेनरंगेणवासांसिचित्राणिरचयेत्सदा सएवसूति-
काख्यातःकर्त्तरीसूतिकार्जकः अयमनुलोमः रंगारीसिंपाल्इतिमध्यदेशभाषाप्रसिध्धः निषादकन्यकाशूद्रसंगाद्यंजनये
त्सुतं सक्रोधकः कुकूटइतिप्रोक्तो हिंसज्ञकः टंकशालासुसर्वासुनाणकानांविधायकः जीवनायाष्टधातूनामंत्यजैःसमतां
व्रजेत् अयंप्रतिलोमः उग्रवैदेहिकायोगाज्जातोमंडूषसंज्ञकः राजकोवर्णतोहीनः प्रथमाश्चांत्यजेषुच वस्त्रनिर्णेजनंकुर्या
दात्मवृत्त्यर्थमेवसः अयमनुलोमः उग्रपारसवाभ्यांयोजातोमोष्कलिकोभिधः वहेदसौतैलयंत्रमुत्तमस्त्वन्यजातितः जीवि
कास्यसमुद्दिष्टाशुद्धतैलस्यविक्रयः तिलहिंसापत्रैर्वा कर्णनासायसंभवः आतोमौधुलिकोनित्यंनिर्वास्योनगराद्बहिः
अयमनुलोमः रथकारस्यवनितासायोगवसमागता सूतेयंतनयंसोपि सूत्रधारइतीरितः जायाजीवश्चशैलूषोनाट्यशा
स्त्रविशारदः जलमंडलकादीनिसूत्राणिरचयेत्सदा लोकविस्मयकारीणिवसेत्सनगराद्बहिः गारुडीइतिभाषाप्रसिध्धः
कुक्कुटस्यहजनिताकुंभकारेणसंगतां तस्याःसूनुःसविख्यातः कुरुविंदइतिस्फुटं कौशेयानिसवस्त्राणिरचयेदात्मवृत्त
ये तुल्योसावंत्यजातीनांस्वधर्ममनुपालयेत् अयंप्रतिलोमोजोल्हाइतिभाषाप्रसिद्धः संगतायेनवनितावर्त्तकेनयदारहः

तस्याशां वरकाभिख्यः पुत्रो सौलक संमतः सहीनस्त्वन्यजातिभ्यः शुचिवासो विधायकः अयंसाली इति भाषाप्रसिद्धः अ
भीर कुकुटाभ्यां योजातः सौवीर संज्ञकः सकुर्यात्तसरीणांच वसनान्यात्मवृत्तये तद्वैपरीत्याद्योजातो निळीकर्त्ता स कथ्यते कौश-
टाइति बंगालदेशभाषाप्रसिद्धः मार्गोनापितयोर्जातो योसौ सां खिल्य संज्ञकः हीनः समुद्यकांसानां कुर्याद्दपनमंजसा जल्दुका
स्त्वर्भृंगाणि रक्ताकृष्टौ प्रयोजयेत्. मार्गामार्दलिकांतेरिव इति भाषाप्रसिद्धः जातो मैत्रेय शकेणजांधिकायां लुयः स्मृतः अ
सौबंधुलसंज्ञोत्राधमः सर्वासुजातिषु सुवर्णकारुविपणे धूल्यां हेमसपश्यति मैत्रेयोनटजांधिकोमेवङ्ग अयंजार इति भाषा प्र-
सिद्धः निषादनारी संयोग्यास्यौष्टिकोजनयेत्स्मृतं सर्पाभुलकसंज्ञो हि प्रसिद्धः औरभ्रंच्छागलीसूते मृजुकंठाद्धि यंतुसः कुर्यान्नव
पटांश्चित्रान्मेषाणांनैवपोषणं अयंधणगार इति भाषाप्रसिद्धः आवर्त्तवनितासूत क्षेमकादत्रपुंत्रकं समहांगुरितिख्यातउञ्छवा
हनतत्परः क्षेमको द्वारपालकः आवर्त्तवनिता सुते समद्रोमिकसंज्ञकं सक्षारोदकमानीयबध्वाकेदार खंडके तज्जातं लवणं
नस्यजीवनं भुविविश्रुतं कारावारिपदानारी वैदेहाज्जनयेत्स्मृतं समेदसंज्ञः कथित स्तुल्योंत्यैः फलजीविकां वातंडवेषःसचरेद
रण्ये वृक्षसंयुते कारावारी कोलस्त्री अयोगृपारसवयोर्ज्जातः कैवर्त्तकाभिदः सहीनस्त्वंत्यजातिभ्यो जालंस्वीकृत्य सर्वतः मत्स्यांज
लचरांश्चान्यान्विक्रीते ह्यात्मवृत्तये नाव्यंचर्मप्रवहणं नद्यां वर्षासु वाहयेत् नदीमुत्तारयेल्लोकांस्तेभ्यश्च यद्धनं ततः जातो विषा

गा·का दंभीर्येणसुधापुल्कलसंज्ञकः अंत्यजानांचसद्दशोधर्मेषुविविधेषुच आरण्यपशुघोषेणाद्दत्तिरस्यात्मपोषणं श्वेनपापर्द्धिका
९ तस्यकथिताकविसंमता कोलीइतिभाषाप्रसिद्धः निषादधिग्वणीजातःप्राणीकारीचराभिधःसहीनस्त्वंत्यजातिभ्योजीवि प·प्र
कातस्यचोच्यंते उपानदंगत्राणानिकुर्यात्तेषांचविक्रयः गोचर्मणामहिष्याश्वचर्मणातस्यजीवनं धिग्वणी मोचिका अयंचा १
भारइतिभाषाप्रसिद्धः आभीरीवेनसंयोगप्रसौर्ष्कलंजनयेत्स्फुतं असावधर्मइत्युक्तः सर्वधर्मबहिष्कृतः स्करास्फकृत्वा
विक्रीयकुर्यात्सधनवर्धनं कलवारइतिप्रसिद्धः कैवर्त्तजाधिकाभ्यांतुजातोमंगुष्टसंज्ञकः सस्फोटयेच्चरवटकान्कृत्वानू
र्णविशेषतः तद्धनंजीवनायालंसोपिकुर्यान्निरंतरं नस्पर्शनंचकर्त्तव्यं कदाचिदपिमानवैः चूर्णकारः धिग्वणीकुंभकाराभ्यां
जातोसौचित्रकारकः संचित्राणिविचित्राणिलेखयेदात्मवृत्तये चित्रकारः कुरुविंदागंजासूतेधीधरोकिंशुकाभिधः असा
वंत्यजइत्येवंवंशपात्राणिजीविका बुरडइतिभाषाप्रसिध्धः वैदेहीतनयासूतेनिषादादाहितुंडिकं महासर्पानुकंडेषुक्षि
त्वाविषवरान्बहून् तैःखेलनंजीविकास्यसेवकस्यैवभूभृतां गारुडीइतिप्रसिध्धः शौनिककर्मचांडालात्सूतेदारावधूसु
तं सकुर्यादजमेषाणांवधंतन्मांसविक्रयी तद्धनंजीवनंतस्यसहीनस्त्वंत्यजातितः खाटिकइतिप्रसिध्धः व्याधाहितुंडि
काभ्यांयोजातोधोधीकसंज्ञकः सकुर्यान्मूषकादीनांहननंभूमिवासिनां जनेभ्योयाचयेद्वित्तंतेनतद्वर्त्तनंस्मृतं मेदस्यवंश- ९

जनिता तथा [illegible]न संगता. सासूते यवनं पुत्रं तुरुष्कः संप्रकीर्त्तितः तस्माद्दृरिष्ठश्चांडालो दयावान्सोतिनिष्ठुरः यवनः चां
डालः पुल्कसींसंगाच्छ्वपाकं जनयेत्सुतं गोगर्दभशुनां कुर्याद्ग्रामान्निःसरणं बहिः साजीविकास्य कथिता सर्वतो लोकनिंद्य
ता महार इति प्रसिध्यः निषादवनितासूते चांडालाड्डोंबसंज्ञिकं असावेत्यावसायीति श्मशान निलये वसेत् तत्र रक्षां
प्रकुर्वीत प्रेतानां वस्त्रजीवनः डोंब इति महाराष्ट्रभाषा प्रसिध्यः आंध्रस्य वनितासंगाच्चांडालो जनयेत्सुतं प्लवसंज्ञं सहाडी
ति लोके सर्वत्र विश्रुतः अंध्योष्ट्रगर्धभानां च मृतानां कालयोगतः कुर्यान्निर्हरणं सोपि मांसभक्षणजीवनः मेदजायुवतीसंगा
च्चांडालो जनयेत्सुतं समांगष्ठ्व पचोलोके स्पृश्यः साहसकारकः जीविका तस्य कथिता आर्द्रगोचर्मरज्जुभिः एवं चांडालपर्यं
ता ब्राह्मणाद्याः प्रकीर्त्तिताः प्रातिलोम्येन च तं तथास्फुटाः संकरजातयः उशनःस्मृतौ तु नामांतराण्युक्तानि तत्र निषाद पारसवत्
नाममात्रकृतो भेदो न जातीवृत्तिकृत इत्यवधेयं गौरवादिहनोक्तं मनुः रजकश्चर्मकश्चैव नटो बुरुड एवं च कैवर्त्तमेदभि
ल्लुश्च सप्तैते अंत्यजाः स्मृता इति कायस्थाचारदीपिकायां जातिविवेक निरूपणं गागाभट्टेन विदुषा नत्वा श्रीराममादरात् जा
तिर्विविच्य संस्कारः कायस्थानां निरूप्यते तथा च पाद्मे सृष्टिखंडे सृष्ट्यादौ सदसत्कर्मज्ञप्तये प्राणिनां विधिः क्षणं ध्यायन्
स्थितस्तस्य शरीरान्निर्गतो बहिः दिव्यरूपः पुमान् हस्ते मषीपात्रं च लेखनीं. दधानश्चित्ररूपेण रक्षितो देवतैर्हृदि चित्र

गुप्त इति ख्यातो धर्म राजसमीपतः ब्रह्मणाभिहिते दैवैः क्षणंध्यात्वा नियोजितः प्राणिनांसदसत्कर्म लेखनाय सबुद्धिमान् भो
जैनाःदौ बलिस्तस्य भागोपि परिकल्पितः ब्रह्मकायोद्भवो यस्मात्कायस्थइति गीयते दक्षप्रजापतेः कन्यांदाक्षायण्यभिधांततः
उपयेमेततःपुत्रो जातस्तस्य महात्मनः विचित्रगुप्तनामासौ बुद्धिचातुर्यवीर्यवान् ततस्तेन मनोः कन्यायथाविधि विवाहिता
स्वक्षाभिधानस्तस्यांधर्मगुप्तो बभूवह धर्मगुप्ताच्च गांधार्यां रुद्रगुप्तो भवत्सुतः तस्मादप्सरसोजातं पुत्राणांतु चतुष्टयम्
माथुरो गौड संज्ञश्च नागरो नैगमस्तथा तेषांनामानि चत्वारि चतुर्णांच यथाक्रमं कायस्थश्चैव शाकश्च कौलिकश्च महेश्वरः एते
षांकाश्यपंगोत्रं तेषां धर्ममथ शृणु स्नानं द्विकालमेतेषां त्रिकालंसंधिवंदनं अष्टम्यांच चतुर्दश्यांचंडीवृत्तपरायणाः भौमवार
व्रताश्चैव नक्तव्रतास्तथा तर्पणंपंचयज्ञानां विधानंच यथाक्रमं एवं चित्रगुप्तकायस्थोत्पत्तिं तद्धर्मांश्चोक्त्वा चांद्रसेनीयकाय-
स्थोत्पत्तिं भार्गवकथा प्रसंगेन उच्यते यथास्कांदे रेणुका माहात्म्ये एवं हत्वार्जुनं रामः संधाय निशितान् शरान् अन्वधावत्स
तान् हंतुं सर्वानेवास्त्रशान्नृपान् केचिद्गमनमाश्रित्य केचित्पातालमाविशन् जटाकृतात्मनः केचिद्दालवेषमधारयन् परिव्राज
कवेषेण केचित्स्थाणुडिनो नृपाः केचिद्रामभयाक्रांता बभूवुर्ब्रह्मचारिणः केचित्साधारसंज्ञास्तु निजधर्मपराङ्मुखाः केचित्क्षप १०
णकाः केचिद्योगिनो ब्रह्मवादिनः बभूवुस्तेथसंन्यासाः सर्वे रामभयान्नृपाः भस्मोद्धूलितसर्वांगा वल्कलाजिनवासिनः

बभूवुस्तापसाः केचिद्वनमाश्रित्य तद्भयात् तेवैष्णवजनाः केचिद्बभूवुर्नटनर्त्तकाः केचिद्वैतालिकाः शूरा राजानस्तद्भयार्दिताः
सगर्भा चंद्रसेनस्य भार्या दाल्भ्याश्रमं गता ततो रामः समायातो दाल्भ्याश्रममनुत्तमं पूजितो मुनिना रामोह्यर्घपाद्यासनादि
भिः स्कंद उवाच अथ माध्यान्हसमये तस्मै भोजनमादरात् ततो दाल्भ्यो मुनिश्रेष्ठो भार्गवाय महात्मने भोजनावसरे तत्र
गृहीत्वापोशनं करे रामस्तु याचयामास हृदिस्थं स्वमनोरथं तस्मै प्रादादृषिः कामं भार्गवाय महात्मने याचयामास रामो हि कामं
दाल्भ्यो महामुनिः ततो द्वौ परमप्रीतौ भोजनं च कृतुर्मुदा भोजनांते महाभागौ आसने उपविश्य च तांबूलानंतरं दाल्भ्यो प्रप
च्छ भार्गवप्रति यत्त्वया प्रार्थितं देव तत्त्वं शंसितुमर्हसि रामउवाच तवाश्रमं महाभाग सगर्भा स्त्री समागता चंद्रसेनस्य राजर्षेस्तां देहि त्वं महामुने ततो दाल्भ्यः प्रत्युवा
च ददामि तव कांक्षितं यन्मया प्रार्थितं देव तन्मे दातुं त्वमर्हसि ततः स्त्रियं समाहूय चंद्रसेनस्य वै मुनिः भीता सा चपलापांगी
कंपमाना समागता रामाय प्रददौ तत्र ततः प्रीतमना अभूत् रामउवाच यत्त्वया प्रार्थितं विप्र भोजनावसरे पुरा तन्मे शंस महा
भाग ददामि तव वांछितं दाल्भ्य उवाच प्रार्थितं यन्मया पूर्वं रामदेव जगद्गुरो स्त्रीगर्भस्थममुं बालं तन्मे दातुं त्वमर्हसि त
तो रामोऽब्रवीद्दाल्भ्यं यथार्थमिह मागतः क्षत्रियांतकरश्चाहं तत्त्वं याचितवानसि प्रार्थितं च त्वया विप्र कायस्थं गर्भमुत्तमं त
स्मात्कायस्थ इत्याख्या भविष्यति शिशोः शुभा जायमानो तदा बालः क्षात्रधर्मात् भविष्यति दुष्टा हि क्षात्रधर्मास्तु वारितुं च त्वमर्हसि

ततोदाल्भ्यः प्रत्युवाच भार्गवं प्रतिहर्षितः माकुरुष्वात्र संदेहं दुर्बुद्धिर्न भविष्यति एवं रामो महाबाहुर्हित्वा तं गर्भमुत्तमं नि
र्जगाम भ्रमात्तस्मात्क्षत्रियांतकरः प्रभुः स्कंद उवाच कायस्थ एष उत्पन्नः क्षत्रिण्यां क्षत्रियात्ततः रामाज्ञया स दाल्भ्येन क्षत्रध
र्माद्बहिष्कृतः दत्तः कायस्थधर्मोऽस्मै चित्रगुप्तस्य यः स्मृतः प्रासकायस्थनामत्वाल्लेखावृत्तिस्तु भूभृतां तस्य भार्याकृता चित्र
गुप्तकायस्थवंशजा तद्वंशजाश्च कायस्था दाल्भ्यगोत्रास्ततोऽभवन् दाल्भ्योपदेशतस्ते वै धर्मिष्ठाः सत्यवादिनः सदाचाररता
नित्यं रता हरिहरार्चने देवविप्रपितॄणां वै अतिथीनां च पूजकाः यज्ञदानतपःशीला व्रततीर्थरताः सदा इति स्कांदोक्तचांद्रसेनी
यकायस्थोत्पत्तिः अथ संकरकायस्थानां जातिनिरूपणं माहिष्यवनितासूनुं वैदेहाद्यं प्रसूयते स कायस्थ इति प्रोक्तस्तस्य कर्म
विधीयते लिपीनां देशजातानां लेखनं सममाचरेत् गणकत्वं विचित्रत्वं बीजपाठी प्रभेदनः अधमः शूद्रजातिभ्यः पंचसंस्का
रवानसौ चातुर्वर्ण्यस्य सेवा हि लिपिलेखनसाधनं व्यवसायः शिल्पकर्म तज्जीवनमुदाहृतं शिखां यज्ञोपवीतं च वस्त्रमारक्त
मम्भसा स्पर्शनं देवतानां च कायस्थः परिवर्जयेदिति कायस्थाचारदीपिकायां त्रिविधकायस्थजातिनिरूपणं अथ तेषां वि
शेषधर्माः संस्काराश्च निर्णीयंते पराशरः कपिलाक्षीरपानेन ब्राह्मणीगमनेन च वेदाक्षरविचारेण कायस्थः पतितो भवेत्
विचारस्त्रिविधः पठनं श्रवणमर्थविभावनं च तत्र वेदश्रवणनिषेधेन श्रवणे पठने च नाधिकारः स च पारिजाते अथास्य वे

दमुपशृण्वतः पुंजतुल्याकर्णपूरणमिति उदाहरणेजीवच्छेदोधारणेशरीरभेदइतिच उदाहरणउच्चारणे तन्निषेधादेवा
र्थविचारनिषेधः तस्यपदवाक्यश्रवणमूलकत्वात् अतश्च मीमांसाध्ययनेनाधिकारः तस्यवेदवाक्यार्थविचारात्मकत्वात् ए
वंव्याकरणाद्यंगाध्ययनेपि केचित्तु इतिहासपुराणादिश्रवणेपिनाधिकारः इतिहासपुराणाभ्यांवेदः समुपबृंहयेदितिस्मृ
त्यातस्य वेदार्थोपबृंहणार्थत्वात् तस्मादिदंवेदविचाराध्येतव्यंमलपत इति वाक्यात् पुराणंपंचमोवेद इति वेदत्वस्मृतेश्चेत्या
हुः तेनएवंतस्य ज्ञानाभावेन कर्माधिकारानुपपत्तेः अतः पुराणश्रवणमात्रजन्यार्थज्ञाने तस्य सर्वकर्मस्वधिकारः स्त्री-
शूद्रद्विजबंधूनांत्रयीनश्रुतिगोचरा तेनभारतमाख्यातंमुनिनाकृपयाकृतमितिभारतात् द्विजबंधवोनुलोमाः येचध
र्मपराराजन्वेदद्विजपरायणाः तेषांमध्येहरेरग्रेकथनीयंप्रयत्नतः इतिनारदीयेनानुलोमजादीनामपितच्छ्रवणविधा
नाच्च यत्तुनाध्येतव्यमिदंशास्त्रंवृषलस्यचसंनिधाविति कौर्मे नवेदविन्यः कथनीयमेतत्पुराणरत्नंपुरशासनस्येतिवा
यवीयंचतत्प्रतिलोमपरं शूद्रप्राधान्येनश्रवणनिषेधपरंवाश्रावयेच्च पुराणानि कृत्वाब्राह्मणमग्रतइति स्मृत्यनुरोधात् अतः
स्मृतिपुराणश्रवणेतस्याधिकारः तज्जन्यज्ञानेनैवतस्यतद्बोधितकर्मस्वधिकार इत्याहुः मदनपारिजातादयोप्येवं अन्येतु
नैतस्य पुराणबोधितसर्वकर्मस्वधिकारः मानाभावात् किंतुस्वोद्देशेन विहितकर्मस्वेवाधिकारः तज्ज्ञानंरक्षकाराध्यये

मवत्तदध्ययनाक्षेपकं अतस्तद्विधायकवेदस्मृतयश्चयेतेष्वेवाधिकारइत्याहुः नचधर्मेशावस्क्तधर्मोज्ञाःसतिधर्ममनुस्मु
ताः मंत्रवर्जनदुष्यंतिप्रशंसांप्राप्नुवंतिचेतिवचनादेतस्यसर्वश्रौतस्मार्त्तकर्मानुष्ठानेमंत्रवर्ज्यमधिकारं इतिवाच्यं तस्यैव
चसामंत्रवर्जनानुष्ठिताइतिनार्थः किंतु मंत्रवर्जंससान्धर्ममित्यमंत्रकोत्पन्नकर्मस्नातोपवास देवतार्चनगुरुब्राह्मणनम
स्कारादिष्वधिकारविधायकत्वात् नन्वेवंतुल्यापुरुषदानादौसमुत्पन्नेकथंतस्याधिकार इतिवाच्यं अधिकारीभवेत्सर्वः
पूर्वधर्मेणवैदिकइतिवचनेनप्रतिप्रसवात्. एवंपौष्टिकेष्वपिमंत्रवर्जमधिकारः मंत्रवर्जनदुष्यंतिकुर्वाणाःपौष्टिकींक्रिया
मितिमेधातीथोवचनमित्याहुः श्रीदत्तकल्पतरुपउरनदाअप्येतदाहुः श्राद्धे नदर्भानुद्धरेच्चैवनापिबेत्कापिलंपयः नो
च्चरेत्प्रणवंमंत्रंपुरोडाशंनभक्षयेत् एतेनिषेधाःअस्यप्रतिग्रहेष्विंनयेनविधिप्राप्तानामेवतत्रदर्भोद्धरणस्यनिषेधः प्रोक्षप्र
द्यांविहितस्यदर्भोद्धरणस्य द्वितीयः प्रायश्चित्तादौविहितपंचगव्यांतर्गतकापिलपयसःतृतीयः काम्यप्रणवजप-
स्यचतुर्थः पुरोडाशपदोपलक्षितसर्वश्रौतकर्मणांकाम्यनित्यविधिप्राप्तानांतेऔषधार्थकापिलंपयःप्राशनेनदोषइति
केचित् अन्यत्धर्मविशेषेनोभयविषयत्वमाहुः जाबालिः पंचगव्यंचकुर्वीतस्नात्वापीत्वाशुचिर्भवेत् आरंभेसर्वकृच्छ्रा-
णांसमाप्तौचविशेषतः आज्येनैवचशालाग्नौजुहुयाद्व्याहृती·पृथक् श्राद्धंकुर्याद्धुतंकुर्याद्धुतानेतुगोहिरण्यादिदक्षिणो

अत्रव्यासवाक्ये व्रतचतुष्टयपरिसंख्यानादिव्रतदेशांतारस्नानं विवाह इति नचैवमुपनयने सति द्विजत्वापत्तिः तदंगी
कारेचाधारत्रयो द्विजा इति निर्देशानुपपत्तिरिति वाच्यं, मूर्धावसिक्तादेस्तवेवमंमाप्युत्तरसत्वात् नचैवं तस्योपनयनसत्वेव
वेदाध्ययनापत्तिः अन्यथोपनयनाभावेन शूद्रस्य वेदाध्ययनाभावोक्तिर्नसंगमइतिवाच्यं अष्टवर्षादिवाक्येष्वितरन्यस्य वसं
तादिवाक्योत्पन्नस्य चोपनयमस्य तमध्यापयीतेति वाक्येन वेदाध्ययनांगतया ब्राह्मणत्वादिविशिष्टोपनयनाभावेनाध्ययना
भावोक्तौ तेषां तात्पर्यत्वात् वेदाध्ययनांगोपनयनाभावेपि शौचाचारशिक्षारूपस्मृत्यध्ययनांगोपनयनसत्वे बाधकाभावाच्च
उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकं वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेति याज्ञवल्क्यो नोपनयनस्य स्मृत्यध्ययनांगता
बोधनस्य स्पष्टत्वात् तेन वेदाध्ययनांगोपनयनप्रसंगसिद्धेः स्मृत्यध्ययनस्य नोपनयनप्रयोजकत्वमिति निरस्तं उक्तवाक्ये
संयोगपृथक्त्वेन तुल्यबहुप्रयोगत्वावगतेरुभयअंगतायाः सत्वात् श्रुत्या ब्राह्मणाद्यंगत्वेनावगतस्योपनयनस्य त
द्रूत द्विजत्वसिध्यर्थत्वावगतेपि उपनीयाध्यापयेदुपनीय शौचाचारशिक्षयेदिति. स्मृतौभावमाविशिष्टभावमाविध्यावग
तेरुभयांगत्वबोधादवेश्यवत्सर्वकामप्रयोग यंद्वाप्रयोगांत्रम निश्चयागाभावेपि आचारोपदेशार्थोपनयनमावश्यकं त
थाच शिष्टाचारोप्यनुरुध्यते एवंचोपनयनस्य द्विजत्वसिद्धिरूपा ब्राह्मण्यादिसंस्कारे वेदाध्ययनं शौचाचारशिक्षा चेति–

गा॰ का॰ प्रयोजनत्रयं सिध्यति तत्र द्विजत्वोत्पत्तौ ब्राह्मणत्वादेरपि हेतुत्वात् मूर्धावसिक्तादौ प्रयोजनद्वयं चांद्रसेनीयकायस्थत्वाच्चा
१४ रवशादाचारशिक्षारूपमेकमेव प्रयोजनमुपनयनस्येति नचैवंशूद्रस्याप्याचारोपदेशार्थं तत्स्यादिति वाच्यं नशूद्रे पातकं प॰ प्र॰
किंचिन्नचसंस्कारमर्हति नास्याधिकारोधर्मेऽस्तिनधर्मात्प्रतिषेधनमिति मनुवचसाविवाहमात्रसंस्कारं शूद्रोपिलभतां स १
देति विवाहातिरिक्तसंस्कारपरिसंख्यापकेन यमवचसाचोपनयननिषेधात् तत्रच समीपेनयनमात्रस्यप्राधान्येन तदं
गभूतोपदेशस्याभिव्यंजकवस्त्राजिनयज्ञोपवीतदंडमेखलापरिधानादिकम मंत्रवद्भवत्येव दीक्षितदंडदानवत् ए
वंतदभिव्यंजकभिक्षायाचनमपिनचकायस्थानां प्रतिलोम्येनात्रापितदभावः शंकनीयः माहिष्यवनितासुते वैदेहाद्यप्र
सूयते सकायस्थइतिप्रोक्तस्तस्यकर्मविधीयते लिपीनांदेशजातानांलेखनेससमाचरेत् गणकत्वंविचित्रंचबीजपाठी वि
भेदतः तस्यातयावर्त्तनंस्यात्कायस्थत्वाविशेषतः अधमः शूद्रजातीयः पंचसंस्कारवानसौ जातकर्मान्नप्राशनंच वपनंकर्णवेध
नं विवाहपंचमस्तस्यनान्यः संस्कारइष्यतइति कायस्थस्यप्रतिलोमपिचांद्रसेनीयानां शुद्धक्षत्रियजयत्वेन प्रतिलोम
त्वाभावात् अतःशारंगधरव्यासवाक्ययोरयमेवविषयः वस्तुतस्तु मात्रकायस्थत्वं कायस्थपदस्य प्रतिलोमज एव
रूढत्वात् पद्मपुराणांतरगतरेणुकामाहात्म्यात्केचितूयोगवशेनात्रयोगत्वाच्च नचैवंक्षत्रियत्वेन मंत्रवदुपनयनं १४

स्त्राणाहामानदातव्यःपंचगव्यंतथैवचं अत्रस्त्रीणांपंचगव्यनिषेधात्स्त्रीशूद्रयोः स्वधर्मत्वाच्छूद्राणामपिनिषेधः प्राप्नोतितथापि
होमवर्ज्जंपंचगव्यंअन्येषांनद्विजन्मनामिति महार्णववचनाच्छूद्र विकल्पः अनुलोमानांतु विष्णुपुराणे स्वाहाकारोनमस्कारोमंत्रस्त
स्यविधीयते यतः होममंत्रस्वधास्वाहावषट्कारादिकंविनेति अतोत्रविकल्पः याज्ञवल्क्यः नमस्कारेणमंत्रेणपंचयज्ञान्
वहापयेत् अत्रनमस्कारमंत्रइंद्रायनमइत्यादिरितिकेचित् नमःस्वाहायैस्वधायैनित्यमेवनमोनमइति अन्ये. इतिगागाभट्टकृ
तकायस्थधर्मदीपेबाळाजीप्रभुंकारितेसामान्यधर्मनिरूपणं ॥ ६९ ॥ ६९ ॥ .६९ ॥ .अथैतस्यसंस्काराः तत्र
प्रतिलोमकायस्थस्यपंचसंस्काराः जातकर्मनामान्नप्राशनकर्णवेधविवाहाःप्रतिवाचनिकाः चित्रगुप्तचांद्रसेनीय गर्भाधाना
दिचौलांताःअष्टौउपनयनादिश्मशानांतरूपाअष्टौ इति भवंतीतिस्मृतिशिष्टाचारानुरोधेन पुंसवनसीमंतजातकर्मनामकरण
नि क्रमणान्नप्राशनचौलांतानष्टौगणयित्वा तेषांबीजगर्भसमुद्भवैनोनिबर्हणंफलमुक्तं तदुत्तरमुपनयनंवेदव्रतचतुष्टयं स्नानं
विवाहस्मशानंचेत्यष्टौसंस्कारानुक्त्वा तेषांचफलंवेदाध्ययनशौचाचारशिक्षादिरूपं दृष्टमदृष्टरूपंचफलमुक्तं एतत्सर्वंवक्ष्य
माणंमनसिनिधाय ब्रह्मक्षत्रियविट्शूद्रावर्णास्त्वाद्यास्त्रयोद्विजः निषेकाद्याःश्मशानांतास्तेषांवैमंत्रतःक्रिया इतिवचनाद्न्ये
षाममंत्रकाएताःक्रियाभवंतीति ज्ञायते गर्भाधानंपुंसवनंसीमंतोजातकर्मचनामक्रियानि क्रमोन्नप्राशनंवपनक्रिया

कर्णवेधोव्रतोद्देशोवेदारंभक्रियाविधिः केशांतस्नानमुद्वाहोविवाहाग्निपरिग्रहाः त्रेताग्निसंग्रहश्चेतिसंस्काराः षोडशस्मृ
ताः इतिद्विजातिसंस्कारान् गणयित्वानवैताः कर्णवेधांताःमन्त्रकर्जक्रियाःस्त्रियश्चित्रगुप्तचांद्रसेनीयकायस्थयोः वेदोक्तमंत्रस
हिताः क्रियास्त्वास्मत्कृतकायस्थप्रदीपेद्रष्टव्याः अत्रतुकपिलाक्षीरपानेनेत्यादिकायस्थानांवेदाधिकारनिषेधपराणिवा
क्यानियान्युक्तानितानितुसंकरजकायस्थपराणीतिबोध्यं चित्रगुप्तकायस्थचांद्रसेनीकायस्थसंकरजकायस्थइतिकायस्थ
पदस्यजातित्रयेपिसत्वात् कायस्थपदेनभ्रमात् धर्मसंकरोभवत्यतः आदौअस्मिन्ग्रंथे संकरजकायस्थानांधर्मकर्माण्यु-
च्यंते अथकायस्थप्रदीपग्रंथेचित्रगुप्तचांद्रसेनीयचकायस्थयोर्धर्मान्वक्ष्यामि विवाहोमंत्रवत्तस्याशूद्रस्यामंत्र
कादशोतिव्यासोक्तिः सच्छूद्रस्यगर्भाधानादिकर्णवेधांतानवविवाहश्चेतिदश असच्छूद्रस्यविवाहमात्रंसंस्कारः शूद्रस्कल
मतांसदेतिहारीतात् द्विवाहमात्रं अन्येषांतु द्विजानांषोडशैव स्युरन्येषांद्वादशैवहि पंचैवमिश्रजातानांसंस्काराःकुलधर्म-
तः वेदव्रतोपनिषद्महानाम्नीमहाव्रतं हित्वाद्वादशसंस्काराः मदनरत्नरूपनारायणौतुहिरण्यगर्भदानप्रकरणे गर्भा
धानजातकर्मनामकरणनिष्क्रमणान्नप्राशनविवाहः षट्पंचमहायज्ञाश्चेत्येकादशसंस्कारान्चतुः अत्रमतत्रयेश्मशान
कर्मनसंस्कारः किंतु शरीरमपत्तिमात्रं अनग्निमतउत्क्रांतेःसाग्नेःसंस्कारकर्मणीत्यत्रसंस्कारपदं लाक्षणिकंइतिज्ञेयं

वेदाध्ययनंचास्तीतिवाच्यं नदानंक्षत्रियकुलंक्षत्रियत्वमनीनशादिति श्रीभागवतबोधितक्षत्रियत्वनाशेन तदसंभवा
त्‌· तथैव शिष्टाचाराश्च अतस्तेषां द्वादश संस्कारवत्तूपनयनंभवतीतिसिद्धं समावर्तनस्य स्नानरूपतयास्नानस्यच वेद
स्नानकव्रत स्नातकोभयस्नातकाधिकारत्वेन कायस्थस्य वेदव्रताभावात्‌ समावर्त्तनंनास्तीति केचित्‌ अन्येतुसमावर्त्त
नस्य आश्रमांतरे प्राप्त्यर्थ गुरुकुलादागमनरूपतयावेदव्रताभावेपिसमावर्त्तनबाधकाभावः अतः समावर्त्तनंभवतीत्याहुः
अत्रस्वाध्यायेनैव विप्राणां पौरो हित्येनभूभुजां अमंत्रकंतुशूद्राणामन्येवाजसनेयिन इति स्मृतेर्वाजसनेयिशाखया संस्कारा
न्हिकानुष्ठानं इति मदने अस्य हेमाद्र्यादिआहूयदीयतेशक्त्यलंकृता यज्ञस्थऋत्विजेदैव आदायार्षस्तु गोद्वयं इत्युक्त्वार्च
रताधर्मंसहायादीयतेर्थिनः सकायः पांक्त्येतज्ज्ञः पट्‌षट्‌ वंश्यात्सहात्मना आसुरोद्रविणोदाना द्गांधर्वो समयान्मिथः राक्षसो
युद्धहरणात्पैशाचःकन्यकाच्छलादिति ब्राह्मदेवार्षप्राजापत्यगांधर्व राक्षसपैशाचा अष्टौविवाहः अत्रकायस्थस्यासुरगांधर्व
पैशाचाधर्म्याः राक्षसोधर्म्यः दैवोनास्त्येषां र्त्विज्याभावात्‌ ब्राह्मादयो मध्यमाः नदाहमनुः षडानुपूर्व्यात्‌ विप्रस्य क्षत्रस्य
चतुरोवरान्‌ विट्‌शूद्रयोस्तुतानेव विद्याद्धर्म्यानराक्षसान्‌ मानासुरगांधर्वपैशाचान्‌ क्षत्रस्यैवब्राह्मोदैवोविप्रस्यैव अन्येत्र
याणांतुल्या इत्युक्तं हेमाद्रौ पैठीनसिः राक्षसो वैश्यस्य पैशाचः शूद्रस्य सर्वेवा सर्वेषां प्रचेताः पैशाचो संस्कृत प्रसूतानांप्रतिलो

मज्ञानांचेति वसिष्ठः नोदकेन नवावाचाकन्यायाः पतिरुच्यते पाणिग्रहणसंस्कारात्सप्ततित्वं सप्तमे पदे गांधर्वासुरपैशाचावि
वाह्मभावेन्यस्मै दानमुक्तं बलादपहृताकन्या मंत्रैर्यदिनसंस्कृता अन्यस्मै विधिवद्देया यथाकन्या तथैव सा इदं राक्षसपैशाचपरं
नयोरेवबलादपहृतत्वात् तत्र पाणिग्रहणं सवर्णविषयं पाणिग्राह्याः सवर्णास्वित्यविशेषेण याज्ञवल्क्योक्तेः उदकपूर्वकन्यादान
स्यविकल्पः उक्तंतु पाणिग्रहणंसर्ववर्णेषु सर्वेशः जलपूर्वंतु विप्राणामन्येषामपिकामयेतिकौमुद्यांब्राह्मात् अन्येत्वेतेनब्राह्मोपिभव
ति अलंकृतकन्यामुदकपूर्वांदद्यात् एषब्राह्मोविवाह इत्याश्वलायनेनब्राह्मे विवाह एवजलपूर्वतोक्तेरित्याहुः तत्रविशेषः उदगयन
आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिंगृह्णीयात्त्रिषुत्रिषुत्तरादिषुस्वातौ मृगशिरसिरोहिण्यांवा तिस्रोब्राह्मणस्यवर्णानुपूर्व्येण
द्वेराजन्यस्य वैश्यस्य सर्वेषां शूद्राणामप्येकेमंत्रवर्जमितिसूत्रं कुमार्याः अनन्यपूर्वाया इत्यर्थः तेनोढायाउद्वाहनिषेधोथसिद्धः
याज्ञवल्क्यः अनन्यपूर्विकांकांतामसपिंडांयवीयसीं अरोगिणींभ्रातृमतीमसमानार्षगोत्रजां उद्वहेदित्यन्वयः कांतासंदरीय
स्यामनश्चक्षुषोर्निबंधस्तस्यामृद्धिरिति गौतमोक्तेः असपिंडांसापिंड्यरहितां सापिंड्यंचैकपिंडदानक्रियासंबंधिजन्यत्वजनकत्वा
न्यतरत्वं लेपभाजश्चतुर्थाद्याः पिंडभागिनांपिंडदः समस्तेषांसापिंड्यंसाप्तपुरुषमितिमात्स्यात् अत्रपितृपदंमातामहस्याप्युपलक्षणं
तथा मातामहादित्रयोर्ध्वभूता अपिलेपभाजोभवंति एवंचपिंडदातुः पितृमातासहकुलयोः पिंडदेवताभूतपुरुषसंततिः सपिंडाश्च

वंति नचैवं मातुलपितृव्यभ्रातृपत्नीषुसापिंड्यंनस्यादितिवाच्यं इष्टापत्तेः नत्संततितयैवसापिंड्यांगीकारेबाधकाभावात् अनेकत्व
पदेनतत्संहाराद्दानदोषः नचैवमपिपिंडदातृदौहित्र्यांनमेन लेपभाजा उद्वाहप्रसंगः इष्टापत्तेः एवंच योयत्पिंडदानक्रियासंबं
धिसंतानः सतेनसापिंडइतिफलितं अत्रनियममाह याज्ञवल्क्यः पंचमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथेति पितरमवधिंकृत्वा
सप्तमादूर्ध्वं मातरमवधिंकृत्वा पंचमादूर्ध्वमित्यर्थः वध्यावरस्यवातातः कूटस्थाद्यदिसप्तमः पंचमीतयोर्मातानत्सापिंड्यंनिवर्त्तत
इतिवचनात् कूटस्थोमूलपुरुषोयमारभ्यगणना एवमुक्तप्रकारेणपितृबंधुषुसप्तमादूर्ध्वमेवविवाह्य त्वंपंचमान्मातृबंधुतः संतानो
भिद्यतेयस्मात्सूर्वत्रादुभयत्रच तमादायगणेद्धीमान् परं यावच्चकन्यकामिति निबंधाच्चसाच्चेत्थं उद्वोढुः पितरोपितुश्च पितरोत्तं
ज्जन्मकृद्दंपती द्वे द्वे तस्यचतुष्कमष्टमभवत्ततोप्यस्यक्रमात्षोडश वंशारंभकंदंपतीप्रमितिरित्यासप्तकक्षांरदाएकैकान्वयकन्यकाः
पितृकुलेत्वासप्तकक्षंत्तुवे यद्यप्येकस्यबहवः सुतास्युस्तदपीहतु संबंधसाम्यादेकैवगणितेत्यवधार्यतां यानित्वेतादृगुरुद्धानि वं
वनानितानिसर्वाणिनिषेधपराण्यनुवादः सापत्नमातृकुलेत्रिपुरुषंसापिंड्यं यद्येकजाताबहवः पृथक्क्षेत्राः पृथक्जनाः एक
पिंडाः पृथक्शौचाः पिंडस्त्वावर्त्तवाचकः कायस्थ एषउत्पन्नक्षत्रिण्यांक्षत्रियात्ततः रामाज्ञयासदाल्भ्येनक्षात्रधर्माद्बहिष्कृतः
दत्तकायस्थधर्मासौ चित्रगुप्तस्ययत्स्मृतः प्राहकायस्थवंशजातहंसाश्चकायस्थादाल्भ्यगोत्राज्जातोभवन् दाल्भ्योपदेशतस्तै

वैधर्मिष्ठाःसत्यवादिनः सदाचाररता नित्यंरता हरिहरार्चने देवविप्रपितृणांवैअतिथीनांच पूजकाः यज्ञदानतपःशीलाव्रततीर्थ
रताःसदा गर्भाधानंपुंसवनं सिमंतोजानकर्मच नामकार्यंनिष्क्रमण मन्नप्राशनचौलकं मौंजीबंधनदानायमेहाव्रतमतःपरं उप
निषद्व्रतगोदानेसमावर्त्तनंनामकं विवाहश्चुत्रकामाय संस्काराः षोडशास्मृताः यत्किंचिद्वैधिकंजाप्यंनवग्रहमखादिकं नानाशांतिश्च
विधिवद्द्विजैरेवकारयेत् षण्णांच कर्मणांमध्येत्रीणिकर्माणिजीविकेति अथैषांस्पष्टधर्माः अस्यक्षत्रियबीजत्वात् पुरो
हितगोत्रं पुरोहितोदाल्भ्यःतद्गोत्रं तद्वंशस्थानामपिदाल्भ्यगोत्रं तथायेषांयेपुरोहिताउदितास्तेषांपुरोहितगोत्राणिभवंतीत्याहुः ना
नागोत्राः चतद्वंशाः कायस्थाप्रभुविसंज्ञिवै तथाशस्त्रास्त्रराहित्यात्क्षत्रियधर्माअपिभवंति शस्त्रास्त्रधारणंचैव प्रजानांपरिपालनं
एतानिमुख्यकर्माणितद्वंशस्थोपिसर्वदेतिस्मृतिसंग्रहोक्तेः धर्मिष्ठाःसत्यवादिनः सदाचारसंपन्नाः नित्यंहरिहरार्चनं देवविप्रपितृ
णामतिथीनांच पूजनं तपोनानजपादिकं दानंनित्यदानादि व्रतंएकादश्यादिः तीर्थंतीर्थवासःगमनंच गर्भाधानं १ पुंसवनं २
सीमंतोन्नयनं ३ जातकर्म ४ नामकर्म ५ निष्क्रमणं ६ अन्नप्राशनं ७ चूडाकरणं ८ उपनयनं ९ वेदारंभः १० महाना-
म्नीव्रतं ११ महाव्रतं १२ उपनिषद्व्रतं १३ गोदानव्रतं १४ समावर्त्तनं १५ विवाह १६ यजनंअग्निहोत्रादिकर्म अध्यय
नंब्राह्मणमुखादध्ययनं स्नानंत्रिकालस्नानं सायंप्रातर्मध्यान्हंच ब्रह्मयज्ञः तर्पणंदेवर्षिमनुष्यपितृतर्पणं पंचमहायज्ञाः

यथाविधिभोजनं. नवग्रहादिजपनानाशांतयश्चब्राह्मण द्वारासर्वंकारयेत् चंद्रसेनभार्योत्पन्नोयः सदाल्भ्य मुनिना चित्रगुप्तवंशस्थकन्यया
विवाहितस्तस्मै चित्रगुप्तधर्मोलेखन इत्यादिरपिदत्तस्तस्मात्तदुत्पन्नाये चांद्रसेनीयकायस्थास्ते चित्रगुप्त कायस्थ समान धर्माणोभवंति सं
बंधतत्वेननानाविधास्तेकायस्थाब्राह्मकायोद्भवादयः चित्रगुप्ताश्चांद्रसेनास्तेषांधर्मः समोभवेदितिते भिषिंतिवचनात् पुरुषाएकजाताः एकजा
तीयाः पृथक् जनांभिंनजातीयावापृथक्क्षेत्राः पितृस्त्री वि न्यत्राः एकपिंडाएकपुरुषजनितास्ते पृथक्शौचाअपिनतेषां विवाहेत्रि पुरुषसापिं
ड्यमितिवचनार्थः त्रिपुरुषंचचैवंपितृपत्न्यः सर्वामातरः तद्भ्रातरोमातुलास्तद्भगिन्योमातृष्वसारस्तद्दुहितरोभगिन्यस्तदपत्यानिभागिनेया
नीति एवंचसापत्नमातुलदौहित्रीपौत्र पर्यंतंसापिंड्यं ऊर्ध्वंसप्तमात्पितृबंधुभ्योबिजनश्चेति गौतमोक्तेः अत्राग्रे बिजनश्चेतिजनकगृह
णात् पूर्वेपितृपदंप्रतिगृहीतृपरमभिधायतेनतस्यजनककुलेसापिंड्यमेवनास्ति गोत्ररिक्थेजनकपितुर्नभजेदतिमः सुतः गोत्ररिक्थानुगः पिंडो
व्यपैतिददतस्वधेतिवचनादितिवाच्यं स्वधाददत इतिपरिसंख्यानादाशौचेसापिंड्यनिषेधेपिविवाहे तंनिषेधाभावात् अतः सापिंड्य
कृताशौचे प्राप्तंभावेपिविवाहनिषेधप्राप्तिरस्त्येव. अतोत्रसप्तपुरुषंसापिंड्यं परंतुप्रतिगृहीतृभार्यायाः पितृपत्नीत्वेनसापत्नमातृवत्कु
लेत्रिपुरुषंसापिंड्यं अतएव तत्पितुर्नमातामहत्वं सपत्नमातृजनकवत् मातुलादिकत्वस्येव अतोदत्तकस्यामातामहादिभ्राद्धेषु प्रतिगृहीतृपार्व
णं स्वमातामहपार्वणंचेतिकेचित् अन्येतुतत्रपितृवन्मातुरपिप्रतिगृहीत्वा पितृवन्मातृत्वमपितुल्यं एवंचतत्पितुर्मातामहत्वमित्या

हुः यत्त्व परार्केणत्रीन्मातृतः पंचपितृतः पुरुषानपिर्चोद्वहेदिति पैठिजसिवाक्यमुदाहृत्येदं दत्तकस्य पालककुले सापिंड्यमित्युक्तं
नतुच्छं पूर्वगौतमविरोधात् मदनपारिजातस्तु इदं दत्तकानुप्रवेशाविषयं तथाहि कस्यचित्पुत्री केनचिद्दत्तकत्वेन गृहीता तत्पुत्रे सापि
ल मातामहवत्पालक मातामहकुलेपि त्रिपुरुषं सापिंड्यमिह तदपितुच्छं तत्र पालकस्य पितृतया गौतम वाक्योक्त साप्तपुरुषसापिंड्ये बा-
धकाभावात् एतस्यावाङ् निषेधपरतया प्युपपत्तेः अतउक्तमेव सापिंड्यप्रत्येतव्य मितियवीयसीं कालतः प्रमाणतश्च अरोगिणीं अन्वि-
किंत्स रोगरहितां भ्रातृमतीं इदंच पुत्रीकरणायोग्यता संपत्तये असमानार्षगोत्रजामिति नकायस्थपरं सर्वेषां दाल्भ्य गोत्रतया तद सं-
भवात् वस्तुतो नैतेषां दाल्भ्य गोत्रं दाल्भ्यस्य पालकतया तत्तौत्रप्रभृत्य पत्यत्वाभावात् दाल्भ्य गोत्रव्यवहारस्य तद्दीक्षितत्वेन गौणत्वात्
अत एतेषां विवाहे गोत्रपरिक्षैव नास्ति यद्वैतेषां पुरोहित गोत्रेण विवाहं नच पुरोहितं वृणीत इमि विधे राजानं प्रत्येव वृत्तेनैतेषां पुरोहितः सं-
भवतीति वाच्यं पुरोहितार्षेयेण वा क्षत्रिय वैश्ययोश्चार्षेयमिति कात्यायनसूत्रव्याख्याने ब्राह्मणादीनां सर्वेषां पुरोहित साधनात् वस्तु-
तश्चांद्रसेनीयकायस्थानां शूद्रक्षत्रियत्वेन पुरोहितसत्वेनाकिंचिद्बाधकमिति पुरोहित गोत्रेण विवाह गोत्रप्रवर निर्णयश्चास्मत्पूरितसंस्का-
र दिनकरोद्योताववगंतव्यः इति कायस्थधर्मदीपसंस्कार निरूपणं ॥ ॥ अथैतदंगभूत गणपतिपूजन ग्रहशांति पुण्याहवाचन मातृकापू-
जननांदिश्राद्धविधिः याज्ञवल्क्यः एवं विनायकं पूज्य गृहांश्चैव विधानतः कर्मणां सिद्धिमाप्नोति श्रेयश्चाप्नोत्यनुत्तमं एवं पूर्वोक्त विनायक

शांतिविधिनेत्यर्थः तदशक्तौ पूजामात्रे श्रेयस्त्वेति संयोगपृथक्त्वेन पुरुषार्थत्वमपि व्यासः संपूज्य गंधमाल्याद्यैर्ब्राह्मणान् स्वस्ति
वाचयेत् काम्ये कर्मणि मांगल्ये संग्रामे भूतदर्शने अवनिकृतजानुमंडल इत्यादि गृह्यपरिशिष्टोक्तपुण्याहादिवाचयेदित्यर्थः अत्रापि
तत्रजयांजुहुयादितितदंगत्वबोधः अत्र विशेषमाह यमः सोंकारो ब्राह्मणो कुर्यान्निरोंकारं महीपताविति अत्र महीपतिग्रहणं वैश्यानुमाप
लक्षणार्थं तेनैतत्कायस्थानामपीति निरोंकार कात्यायनः कर्मादिषु च सर्वेषु मातरः सगणाधिपः पूजनीयाः प्रयत्नेन पूजिताः पूजयंति ताः
आदिदारंभः सवा प्रवृत्तप्रवर्त्तनं तेन कर्मावृत्तौ तस्यनावृत्तिः विवाहोपनयनादौ तु संस्कार्यभेदात्कर्मभेद एवेति तत्रावृत्तिः पूजयंति कर्मज
न्यं फलं प्रयच्छंतीत्यर्थः अत्रापि पूर्ववदेव कर्मांगत्वे तेन मातृपूजायां नांदीश्राद्धांगत्वं न तदभावे मातृपूजाभावः परास्तः शातातपेन नांदीश्रा
द्धस्य सर्वकर्मांगत्वमुक्तं नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेदिति अत्रास्य विशिष्टाभावबोधाद्भावनाविवाहांगत्वबोधः वैदिकग्र
हणं मदनरत्नधृतब्रह्मांडपुराणोक्तकर्मणोक्तकर्मोपलक्षणार्थं नानिकर्माण्यथाभ्युदयिके मांगल्ये चातिशोभने जन्मन्यथोपनयने चै
लेस्नाने प्रवेशे वा पितॄन् नांदीमुखान्नाम तर्पयेद्विधिपूर्वकं जाबालिरपि यज्ञोद्वाहप्रतिष्ठासु मेखलाबंधमोक्षयोः पुत्रजन्मवृषोत्सर्गे नांदीश्रा
द्धं समाचरेत् वृषोत्सर्गः काम्यः विष्णुपुराणेपि कन्यापुत्रविवाहे प्रवेशे नववेश्मनः नामकर्मणि बालानां चूडाकर्मादिके तथा सीमंतो
न्नयने चैव पुत्रादिमुखदर्शने जातकर्मणीत्यर्थः अस्नाया निषेकस्य दाविद्यापत्तेः स्त्रिया ऋतौ वा तौ आद्ये वृद्धिश्राद्धं कर्मांगवृद्धिसंज्ञितं

अत्रकर्मावृत्तिप्राप्तेतदावृत्त्यापवादमाह कात्यायनः अनेककृतानिकर्माणिक्रियंतेकर्मकारिभिः मतिप्रयोगंनेतास्युर्मातरःश्राद्धमेवच ता
न्विकर्माणिआधानेहोमयोश्चैववैश्वदेवेतथैवच पत्निकर्मणिदर्शेचपौर्णमासेतथैवच एकमेवभवेच्छ्राद्धमेतेषुनपृथक्पृथक् केषुचे
दारंभेपिनवृद्धिश्राद्धंनाष्टकासुभवेच्छ्राद्धं नश्राद्धेश्राद्धमिष्यते नमांस्यसौजातकर्मप्रोषितागतकर्मसु प्रसवादर्वाग्वेदनायांविहिते
सोष्यंतिकर्मणीत्यर्थः द्वादशवर्षोत्तरागतमीलनकर्मणिइत्येके जातकर्मणितिच्छंदोगविषयं स्वकान्यानिस्रांतिकर्माणिसहक्रीयंते ने
षुनांदीश्राद्धंसकृत् गणेशःक्रियमाणानां मातृणांपूजनंसकृत् सकृदेवभवेच्छ्राद्धमादौनपृथगादिष्विति शांतातपोक्तेः उशनाः स्व-
पितृभ्यःपितादद्यात्सूतसंस्कारकर्मसु पिंडानोद्वाहनात्तेषांतस्याभावेतुतत्क्रमात् तेषांसंस्कार्याणांतस्यपितुःक्रमात् संस्कार्यपि
तृकर्मादित्यर्थः अत्रपूर्वधर्मानुवादः अन्यकर्तृकत्वेसंस्कार्यपितृभ्यादानंविधीयते तेनजीवत्पितृकस्यपितुःस्वस्यवाकर्तृत्वेये
भ्यएवपितादद्यादितिवाक्यान्निर्णयः प्रपंचितदिनचर्योद्योते संस्कारकांडइतिस्वस्तिवाचनादिविधिः ॥ ॥ ॥ ॥

इतिगागाभट्टकृतकायस्थपद्धतौप्रथमप्रकरणसमाप्तः

अथगागाभट्टकृतकायस्थपद्धती द्वितीयप्रकर्णप्रारंभः

श्रीगणेशायनमः अथपुण्याहवाचनप्रयोगः कर्मसंकल्पोत्तरं गणेशपूजनपूर्वकं स्वस्तिपुण्याहवाचनं मातृकापूज
नंनांदिश्राद्धंचकरिष्ये इतिसंकल्प्य हेहेरंबत्वमेह्येहि ह्यंबिकात्र्यंबकात्मज ऋद्धिसिद्धियुतत्र्यक्षसर्वलोकपितः प्रभो
नागास्यनागहारत्वंगणनाथचतुर्भुज भूषितःस्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः आवाहयामिपूजार्थंरक्षार्थंचममप्रभो।
इहागच्छगृहाणत्वंपूजांरक्षचमेक्रतुं इत्यावाह्यासनपाद्यार्घ्याचमनीयस्नानवस्त्रयज्ञोपवीतगंधपुष्पधूपदीपनैवेद्यफ
लतांबूलदक्षिणाषोडशोपचारैःसंपूज्य पुष्पफलयुतमर्घ्यमादाय रक्षरक्षगणाध्यक्षममत्रैलोक्यरक्षक भक्तानाम-
भयंकर्तात्राताभवभवार्णवात् द्वैमातुरकृपासिंधोषाण्मातुराग्रजप्रभो वरदत्वंवरंदेहिवांछितंवांछितार्थद गृहाणा-
र्घ्यमिदंदेवसर्वदेवनमस्कृत अनेनफलदानेनफलदोभवमेप्रभो इत्यर्घ्यंदत्वाप्रार्थयेत् विघ्नेश्वरायवरदायसुराधिपा
यलंबोदरायसकलायजगद्धिताय नागाननायश्रुतसर्पविभूषितायगौरीसुतायगणनाथनमोनमस्ते भक्तार्तिनाश
नपरायगणेश्वरायदारिद्र्यदुःखशमनायसुरेश्वराय विद्याधरायविकटायचवामनायभक्तप्रसन्नवरदायनमोनमस्ते
नमस्तेब्रह्मरूपायविष्णुरूपायतेनमः नमस्तेरुद्ररूपायकरिरूपायतेनमः वक्रतुंडमहाकायसूर्यकोटिसमप्रभेतिप्रा
र्थयेत् ततःपुण्याहवाचनंकुर्यात् यथास्वपुरतः प्रस्थपरिमितस्य शक्त्यान्यूनस्यवाधान्यराशेरुपरि दक्षिणोत्तरयोः सुव-

र्णरजतताम्रमृन्मयान्यतमं पात्रं मनोहरमलंकृतं शुद्धजलपुण्यपूरितं कृत्वा दक्षिणोत्तरतो भूमिं स्पृशेत् जगत्त्रयप्रसूता
त्वं सर्वेषां कामदा सदा कर्मांगेषु सदा श्रेष्ठे भूमे देवि नमोऽस्तु ते इति भूमिं स्पृश्य· ओषध्यो यज्ञियाः पुण्या जीवानामादिकार
णं तस्मादासां प्रवरणात्संतु कामाः सदा मम धान्यराशिं कृत्वा कनककमनीयश्च लक्ष्म्या यो विधृतः पुरा देवानाममृ
ताधारं तमिह स्थापयाम्यहम् कलशं स्थापयित्वा। गंगे च यमुने चैव गोदावरि सरस्वति नर्मदे सिंधु कावेरि जलेऽस्मिन्सं-
निधो भव. इति पात्रे जलं क्षिपेत् चंदनागरुकर्पूरकस्तूरीप्रभृतीनि च सुगंधि पुण्यद्रव्याणि गंधार्थं प्रक्षिपाम्यहम् इति
गंधं कांडे कांडे धिरोहंति अजरा चामृता सदा तस्यास्त्वस्याः प्रदानेन भूयासमजरः सदा दूर्वाः अश्वत्थच्चूतचंपादिपल्लवानि
मितः स्मरेः क्षिपामि कलशे नित्यं तेन मेऽस्तु शिवं सदा॥ पंचपल्लवाः पवित्राः पुण्यवल्मीकात्संगमादात् हस्तान्हृदात् मृत्तिकाः पंचपुण्याश्च सर्वकर्मशुभाक्षाः
मृत्तिकाः वज्रवैडूर्यमाणिक्यं नीलकं पुष्परागकं ख्यातानि पंच रत्नानि कुंभेऽस्मिन्प्रक्षिपाम्यहम् पंचरत्नानि शरण्यं सर्वलोकानां लज्जा
यो रक्षणं परं सुवेषधारि वस्त्रं त्वमतः शांतिं प्रयच्छ मे पूर्णपात्रे पाशहस्तं च वरुणं पयसां पतिमीश्वरं· आवाहयामि यज्ञे
स्मिन् पूजेयं प्रतिगृह्यतां इति वरुणमावाह्य संपूज्य कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः मूले तत्र स्थितो ब्रह्मा म
ध्ये मातृगणाः स्मृताः कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुंधरा गायत्री चैव सावित्री शांतिः पुष्टिकरी तथा आयांतु मम

शांत्यर्थं दुरितक्षयकारकाः कलशे आक्षतानिक्षिपेत् मातापितृभ्यांनमः इष्टदेवताभ्योनमइतिनत्वा अवनिकृतजानुमं प· प्र·
डलः कमलमुकुलसदृशमंजलीं शिरस्याधायदक्षिणेनपाणिनास्वर्णकलशं धारयित्वा आशिषः प्रार्थयंते एताःसत्याआ २
शिषःसंतु दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिच तेनायुःप्रमाणेनपुण्याहंदीर्घमायुरस्तु अपांमध्येस्थितोब्रह्मा अ
पांमध्ये प्रजापतिः अपांमध्येस्थितादेवा शिवाआपोभवंतुनः शिवाआपःसंतु लक्ष्मीर्वसतिपुण्येपुलक्ष्मीर्वसतिपुष्क
रे लक्ष्मीर्वसेत्सदासोमेसौमनस्यंसदास्तुनः सौमनस्यमस्तु अक्षतंचास्तु दीर्घमायुःशांतिः पुष्टिः स्तुष्टिश्चास्तु अ
क्षताःपांतुआयुष्यमस्तु पुष्पाणिपांतुसौश्रियमस्तु तांबूलानिपांत्वैश्वर्यमस्तु दक्षिणाःपांतुबहुधेयंचास्तु चतुरोवि-
प्रान्गंधादिभिःसंपूज्य यं कृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाःशुभाः शोभनाः प्रवर्तंते तमहमोंकारमादिंकृत्वा भवद्भिरनुज्ञातः
पुण्यंपुण्याहंवाचयिष्ये वाच्यतामितिब्रूयुः मा विघ्नंमा च मे पापंमासंतुपरिपंथिनः सौम्याभवंतुसुखिनः सर्वलोकाः
सुखावहाः इतिकर्तावदेत् विप्रास्तथास्त्वित्युक्त्वा करोतुस्वस्तितेब्रह्मास्वस्तिचापिद्विजातयः तुभ्यंराजर्षयःसर्वे-
स्वस्तिकुर्वंतु नित्यशः स्वस्त्यस्तुद्विपदेभ्यश्चचतुष्पादेभ्यएवच स्वस्त्यस्त्वेकपदेभ्यश्चसर्वेभ्यःस्वस्तितेसदा असि २
तोदेवलश्चैवस्वस्तिकुर्वंतुतेसदा धाताविधातालोकेशोदिशश्चैवदिगीश्वराः स्वस्तितेद्यप्रयच्छंतुकार्तिकेयश्चषण्मु

रवः विवस्वान् भगवान् शक्तिः करोतु तव सर्वशः दिग्गजाश्चैव चत्वारः क्षितिश्च गगनं ग्रहाः अधस्तात् धरणीं यो सौना
गो धारयते सदा. शेषश्च पन्नगः श्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु पुष्टिरस्तु तुष्टिरस्तु वृद्धिरस्तु अविघ्नं आयुष्यम०
आरोग्यं० शिवंकर्मास्तु कर्मसंमृद्धि० पुत्रसंमृद्धि० धनधान्यसस्मृद्धि० इष्टसंपदस्तु अरिष्टनिरसन०. यत्पापं तत्प्र
तिहतमस्तु यच्छ्रेयस्तदस्तु उत्तरे कर्मण्यविघ्नमस्तु उत्तरोत्तरमहरहरभिवृद्धिरस्तु उत्तरोत्तराः क्रियाः शुभाः शोभनाः संप
द्यंतां इष्टकामाः संपद्यंतां तिथिकर्णमुहूर्तनक्षत्रसंपदस्तु तिथिकर्णमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंतां तिथिक
र्णमुहूर्तनक्षत्र प्रीयतां अग्निपुरोगा विश्वेदेवाः प्रीयतां इंद्रपुरोगा मरुद्गणाः प्रीयं० ब्रह्मपुरोगाः सर्वेदेवाः प्रीयं० वसि
ष्ठपुरोगा ऋषिगणाः प्री० अरुंधतीपुरोगा एकपत्न्यः० ब्रह्मच ब्राह्मणाश्च० श्रीसरस्वत्यौ० श्रद्धामेधे० भगवतीका-
त्यायनी० भगवतीमाहेश्वरी० भगवतीपुष्टिकरी० भगवती तुष्टिकरी० भगवतीपु० भगवती ऋद्धिकं० भगवंतौ विघ्नवि
नायकौ प्रीयेतां भगवान् स्वामीमहासेनः सपत्नीकः ससूतः सपार्षदः सर्वस्थानगता प्रीयंतां . हरिहरहिरण्यगर्भाः प्री०
सर्वाग्रामदेवताः प्री० . सर्वाः कुलदेवताः प्री० सर्वाइष्टदेवताः प्री० हताः ब्रह्मद्विषः हताः परिपंथिनः हता अस्य कर्म-
णो विघ्नकर्तारः शत्रवः पराभवं यांतु . शाम्यंतु घोराणि शाम्यंतु पापानि. शाम्यंत्वीतयः शुभानि वर्धतां शिवा आपः

ग·का· संतु· शिवाऋतवःसंतु शिवाअग्नयःसंतु शिवाआहुतयःसंतु शिवाओषधयःसंतु शिवावनस्पतयःसंतु शिवाअ प·प्र·
३ तिथयःसंतु अहोरात्रेशिवेस्यातां शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहितादित्यपुरोगाः सर्वेग्रहाः प्री २
यंतां भगवान्नारायणः प्री॰ भगवान्पर्जन्यः प्री॰ भगवान्स्वामीमहासेनः प्रीयतां पुण्याहकालान्वाचयिष्ये वाच्य
तां ब्राह्मंपुण्यमहर्यच्चसृष्ट्युत्पादनकारकं वेदवृक्षोद्भवंनित्यंतत्पुण्याहंब्रुवंतुनः दीयंतेयत्रदानानिपूज्यंतेचद्विजा-
तयः दृश्यतेतत्रमांगल्यंतत्पुण्याहंसदास्तुमे मत्यंसहकुटुंबिनेमहाजनान्नमस्कुर्वाणायाशीर्वचनमपेक्ष्यमाणायास्य
कर्मणः पुण्याहंभवंतोब्रुवंतु स्वस्तिपुण्याहमितिब्रूयुः एवंत्रिः स्वस्तिर्यात्वविनाशाख्यापुण्याकल्याणसिद्धिदा
विनायकःप्रीयतांनित्यंतांस्वस्तिंभोब्रुवंतुनः मह्यमित्यादि अस्यकर्मणः ममगृहेस्वस्तिंभवंतोब्रुवंतु आयुष्मतेस्वस्ति
सागरस्यतुयावृद्धिर्महालक्ष्म्यादिभिःकृता संपूर्णाचैवचंद्रेण तामृद्धिंभोब्रुवंतुनः मह्यमित्यादि अस्यकर्मणोम
मगृहेकल्याणंभवंतोब्रुवंतु कल्याणमितिविप्राः एवंत्रिः अस्तुश्रीरितिविप्राः वर्षशतंपूर्णमस्तु वंशाभिवृद्धिरस्तु प्र
जापतिःप्रीयतांइति॥ ततःउत्तरकलशंदक्षिणहस्तेदक्षिणकलशंवामहस्तेगृहीत्वा धाराद्वयंपातयन्वदेत् शक्रादय-
स्तुदेवताश्चप्रीयंताम्इतिवदेत् ततःस्ववामभागेपत्नीमभिषेकार्थमुपवेशयेत् आशीर्वादेभिषेकेचपत्नीचोत्तरतोवि ३

शोदिति प्रयोगपारिजातात् ततस्ताभिरद्भिः पल्लवदूर्वाभिरुदङ्मुखाविप्रा अभिषिंचेयुस्तिष्ठंतः तत्र मंत्राः सुरास्त्वा-
मभिषिंचंतु ब्रह्मविष्णुमहेश्वराः वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः प्रद्युम्नश्चानिरुद्धश्च भवंतुविजयायते (औ-
रवंडलोग्निर्भगवान्तथासंकर्षणोविभुः प्रद्युम्नश्चानिरुद्धश्च भवंतुविजयायते) आखंडलोग्निर्भगवान्यमोवैनिर्ऋति
स्तथा। वरुणः पवनश्चैव धनाध्यक्षस्तथाशिवः ब्रह्मणासहितासर्वे दिक्पालाः पांतुतेसदा कीर्तिर्लक्ष्मीर्धृतिर्मेधापु
ष्टिः श्रद्धाक्रियामतिः बुद्धिर्लज्जावपुःशांतिः कांतिस्तुष्टिश्च मातरः एतास्त्वामभिषिंचंतु देवपत्न्यः समागताः आदि-
त्यश्चंद्रमाभौमो बुधजीवसितार्कजाः ग्रहास्त्वामभिषिंचंतु राहुः केतुश्च तर्पिताः देवदानवगंधर्वा यक्षराक्षसपन्नगाः
ऋषयोमनवोगावो देवमातरएवच देवपत्न्योद्रुमानागा दैत्याश्चाप्सरसांगणाः अस्त्राणिसर्वशस्त्राणि राजानोवाह-
नानिचं औषधानिचरत्नानि कालस्यावयवाश्चये सरितः सागराः शैलास्तीर्थानिजलदानदाः एते त्वामभिषिंचंतु स
र्वकामार्थसिद्धये अमृताभिषेकोस्तु ततः पिठोपरिवस्त्रंनिधायतदुपरितंदुलपूजांकृत्वा उदकंसंस्थामातृरावाह-
येत् तत्र मंत्राः हिमाद्रितनयांदेवीं वरदांभैरवप्रियां लंबोदरस्यजननीं गौरीमावाहयाम्यहम् विश्वस्मिन्भूरिवदनां
जरानिर्जरसेविताम् बुधप्रबोधिनींसौम्यां मेधामावाहयाम्यहम् जगत्सृष्टिकरीं धात्रीं देवींप्रणवमातृकां वेदगर्भा-

 ज्ञानमयींसावित्रींस्थापयाम्यहं सर्वास्त्रधारिणींदेवींशक्तिखड्गगदाधरां आवाहयेदेवसेनांतारकासुरमर्दिनीं ह 
४ विर्गृहीत्वासततंदेवेभ्योयाप्रयच्छति तांदिव्यरूपांपरमांस्वाहामावाहयाम्यहम् अग्निष्वात्तपितृभ्योवैकव्यार्थंया-
प्रतिष्ठिता पितृन्संतोष्ययेद्देवींस्वधामा रक्षांतिसततंयस्माज्जगत्स्थावरजंगमं अचिंत्यशक्तिरूपास्तामातृरा॰ २
सुरासुरनरैर्नित्यंपूज्यंतेयासुखावहा भक्तिभावेनयालोकेमातृ॰ सुखहर्षकरींधात्रींभक्तानामभयंकरीं हर्षो
त्फुल्लास्यकमलांदृष्टिमा॰ पोषयंतींजगत्सर्वंस्वदेहप्रभवैर्वरैः शाकैरन्नैःफलैर्मूलैःपुष्टि॰ पत्तनेनगरेग्रामेविपि
नेपर्वतेगृहे नानाजातिकुलेशानींदेवींषण्मुखांकर्मलोचनां तारकासुरसंधात्रींकौमारींस्थापयाम्यहम् नीलांगी
गरुडारूढांपीतवस्त्रविराजितां आबद्धमुकुटांदेवींवैष्णवींस्थाप॰ ऐरावतसमारूढांकुलिशायुधराजितां सहस्रन
यनांदेवींमाहेंद्रींस्थापयाम्यहं रक्तबीजवधोद्युक्तांमहाबलपराक्रमां चंडमुंडप्रमथिनींचामुंडांस्थापयाम्यहम् मातृ
णांपुरतोऽस्त्येषःसदाखेलतिबालवत् सर्वदुष्टहरःक्षेत्रपालंतं॰ एवमावाह्यताःसर्वापूजयित्वाविशेषतः नैवेद्या
दिबलींदत्वादीपान्प्रज्वाल्यसर्वतः ततोनांदीश्राद्धंकुर्यात् तद्यथा द्वारिकृतगोमयमंडलंविप्रद्वयंप्राङ्मुखंपाद-
योःस्वागतंवामित्युक्त्वाउपविश्यस्वयमुदङ्मुखः पादौप्रक्षाल्य आद्यकर्तव्यकर्मनिमित्तकाभ्युदयिकश्राद्धेवैश्वदेवि ४

कं भवंतौ मयानिमंत्रितौ इतिजानुपातेन विप्र दक्षिणपाणिंस्पृशन् निमंत्रयिपितनिमंत्रितोस्वः प्रतिवचनं सत्यवसुसंज्ञ
का विश्वेदेवाः इदंवः पाद्यमेषोर्घ्यमिदमाचमनं तथैव विप्रद्वयजानुनी स्पृश अमुकगोत्राणां नांदीमुखानां पितृमातामहीनां
नामधेयानां कर्तव्यवृद्धिश्राद्धे मयानिमंत्रितौ भवंतौ इत्यामंत्र्य अमुकगोत्रा नांदीमुखाः मातृपितामहीप्रपितामह्यः इदंवः
पाद्यमेषोर्घ्यमिदमाचमनं तथैव विप्रद्वये मुकगोत्राणां नांदीमुखानां पितृमातामहप्रपितामहानां अमुकनाम्नां कर्तव्यवृद्धि
श्राद्धे भवंतौ मयानिमंत्रिताविल्यामंत्र्य अमुकगोत्रा नांदीमुखाः पितृपितामहप्रपितामहाः इदंवः पाद्यं एषोर्घ्य इदमा
सनं तथैव विप्रद्वयमुपवेश्यामुकगोत्राणां नांदीमुखानां मातामहप्रमातामहानां अमुकनाम्नां कर्तव्याभ्युदयिकश्राद्धे भवंतौ
मयानिमंत्रिताविल्यामंत्र्य अमुकगोत्राः नांदीमुखाः मातामहप्रमातामहवृद्धप्रमातामहाः इदंवः पाद्यं इषोर्घ इदमाचमनं अ
क्रोधनैः शौचपरैः सततंब्रह्मचारिभिः भवितव्यंभवद्भिश्चमयाच श्राद्धकारिणा इति ब्राह्मणान् वृतमंत्रणानंतः प्रवेश्य उ
चितासने उपवेश्यततः प्रत्यासनंदीपंदद्यात् स्वयमुपविश्य विष्णुंस्मृत्वा अद्यामुकगोत्राणां नांदीमुख मातामहादीनां दे
वतानां उपक्रांतं श्राद्धाख्यं कर्मकरिष्ये श्राध्धभूमौगयां ध्यात्वाध्यात्वादेवंगदाधरं वस्वादींश्चपितृन्ध्यात्वा ततः श्राद्धं प्रव
र्तने इत्युक्त्वा यवोदकेन श्राद्धोपस्कारान्प्रोक्ष्य प्रागग्रंकुशद्वयमादाय सत्यवसुसंज्ञकानां विश्वेषांदेवानां इदमासनं स्व

स्वासनं आस्यतांधर्मोसि नांदीमुखश्राद्धे विश्वेदेवस्थाने क्षणः क्रियतां तथा प्राप्नोतु भवान् प्राप्नवानीत्यंतं कृत्वेवं मातृ
पितामहादीनां नांदीमुखमासनं एवंपितृमातामहप्रमातामहानां एवं मातामहं वृद्धप्रमातामहानां सपत्नीकानां इदमासनं-
इत्यादि प्राप्नुवानीत्यंतं कृत्वा सत्यवसुसंज्ञका विश्वेदेवा एष गंध इमानि पुष्पाणि एवमेष धूप दीप इदमाच्छादनं इयं वृ
द्धिरिति गंधादि दत्वा एवं मातृपितामहादीनां सपत्नीकानां विमान् गंधपुष्पधूपदीपाच्छादनादिभिः संपूज्य आमान्नपूरि
तानि पलाशादिभिः पत्रनिर्मितानि पत्राण्यासाद्य सत्यवसुसंज्ञका विश्वेदेवा नांदीमुखाः यः युग्मब्राह्मणभोजनपर्या-
प्तमाममुत्सृजेत् न मम मे यं च वृद्धिरिति आमान्नद्वयं दद्यात् दूर्वायाःअग्रमग्रे रेखात्रयं कृत्वा देवताभ्यः पितृभ्यश्च म-
हायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिः पठित्वा गंधपुष्पयुतं यवोदकं नांदीमुखमातरः
शुंधंतामिति दत्वैवं पितामह्यादिभ्यो यवान्दत्वा दूर्वाभिः प्रच्छाद्य दध्यक्षतबदरघृतमधुमिश्रं पिंडं गृहीत्वा मातर्नांदीमु
ख एष ते पिंडो नम इयं च वृद्धिः मातापितामह्यादिभ्यो दत्वा दूर्वामूलेषु हस्तं निमृज्य श्वासं नियम्य पर्यावृत्त इयं च वृद्धिः वृत्य
पर्ववत्पिंडेष्ववनेजनजलं दत्वा हरिं स्मृत्वा वासांस्यादाय पिंडेषु समर्प्य पिंडान् गंधादिभिः संपूज्य पिंडोपरि धारां दत्वा पिंडानु ५
त्थाप्य विकिरं दद्यात् ततः सुप्रोक्षितमस्तु इति भूमिं प्रोक्ष्य विप्रहस्ते शिवा आपः संत्विति जलं सौमनस्यमस्त्विति पु

ष्यं अक्षतं चारिष्टंचास्त्विति यवान्दत्वा मात्रादिसंबंधिनोविश्वेदेवाः प्रीयंतामिति अमुकगोत्रामातरो मुकनाम्नोनांदी-
मुख्योन्नपानादिभिः प्रीयंतामित्यादिप्रकारेणमातृपितृब्राह्मणहस्तेजलंदत्वा अघोराः पितरः संतुइतिपिंडोपरिधारां
कृत्वा गोत्रंनोवर्धतां दातारोनोभिवर्धतांश्रत्धाचनोमाव्यगमत् बहुंधेयंचनोस्तु माचयाविष्मकंचनेत्याशिषः प्रार्थ-
येत् कृतनांदीश्राद्धे सांगतासंसित्ध्यर्थंद्राक्षामलकनिष्क्रियभूतंद्रव्यंदक्षिणांसंप्रददे इत्युक्त्वाइतिविसर्जयेत् अथ
पिंडकनांदीश्राद्धस्यसांकल्पिकप्रयोगः . कर्तायवान्दूर्वाश्चादाय सत्यवसुसंज्ञिकाविश्वेदेवानांदीमुखाइदंवः पाद्यंस्वधानमइ
यंचवृद्धिः मातृपितामहीप्रपितामत्यः नांदीमुखाइदंवः पाद्यंस्वधानमइयंचवृद्धिः मातामहमातुः पितामहमातुः प्रपिता-
महापत्नीसहितानांदीमुखाइदंवः पाद्यमियंचवृद्धिः ·सत्यवसुसंज्ञकाविश्वेदेवांनांदीमुखाः वः एतदासनगंधाद्युपचार-
कल्पनंस्वाहा · नमइयंचवृद्धिः मातृपितामहीप्रपितामत्यः नांदीमुखाः वः एतदासनगंधा॰ पितृपितामहप्रपितामह
प्रपितामहाः नांदीमुखावः एतदासनउप॰ मातामहमातुःपितामहमातुः प्रपितामहाः पत्नीसहिताः नांदीमुखाः वः एत
दासनगंधाद्युपचारकल्पनंस्वनमइयंचवृद्धिः सत्यवसुसंज्ञिकविश्वेदेवानांदीमुखाः वः युग्मब्राह्मणभोजनपर्याप्तमामान्न
स्वाहानमइयंचवृद्धिः मातृपितामहिप्रपितामत्यनांदीमुखायुग्मब्राह्मणभोजनपर्याप्तमामान्नंस्वः नमइयंचवृद्धिः पितृपि

तामहमातुः प्रपितामहाः नांदीमुखाः वः युग्मब्राह्म॰ मातामहमातुः पितामहमातुः प्रपितामहाः नांदीमुखाः वः युग्मब्रा
ह्मण॰ द्राक्षामलकं तन्निष्क्रयीभूतं द्रव्यं वा नांदीमुखश्राद्धं सांगतासिध्यर्थं दक्षिणात्वेन स्वाहा न मम इयं च वृद्धिः मा-
तापितामही चैव तथैव प्रपितामही पिता मातामहश्चैव तथैव प्रपितामहः मातामहस्तत्पिता च वृद्धमातामहादयः ए
ते भवंतु सुप्रीताः प्रयच्छंतु च मंगलं अनेन नांदीश्राद्धेन नांदीमुखदेवताः प्रीयंतां मंगलवादित्रादिकं कारयेत् इति-
गागाभट्टकृते कायस्थधर्मदीपे पुण्याहवाचनांदिप्रयोगः अथ सर्वहोमसाधारणविधिः चतुर्विंशत्यंगुलमशक्तौ
वष्टादशांगुलं वा मृदचतुरस्रं स्थंडिलं परिकल्प्य गोमयेनोलिप्य तत्पश्चिमभागे यज्ञियकाष्टेन प्रादेशरेखामुदगायतां
कृत्वा दक्षिणोत्तरतः प्रागायतं रेखाद्वयं कृत्वा मध्ये रेखात्रयं परिकल्पयेत् मध्ये यज्ञियकाष्ठं संस्थाप्य प्रोक्ष्य प्राच्यां दि
शि त्यजेत् ततोग्न एहीत्यग्निमावाह्य वैश्वानर नमस्तेस्तु हुताश स्वाहया सह देवानां प्रीणनार्थाय तिष्ठास्य स्थंडिले मम
त्यग्निं प्रतिष्ठापयेत् अग्निश्च व्रते हेमाद्रावुक्तः स्त्रीबालशूद्रमूर्खैस्तैर्होतव्यं प्रत्यहं तथा सभ्ये वा वसथे वापि न तु कुंडे क-
दाचन स्त्रियो बालश्च द्विजानामन्येषां च एवं द्विजस्त्रीणां गृह्याग्निसत्वेपि वत्कर्तृकव्रतोद्यापनादिहोमो न गृह्ये किंतु लौ
किक एव मूर्खा वेदाध्ययनानधिकारिणः सभ्यात आगतः सभ्यः श्रोत्रियागारादीनीत्यर्थः ततः प्रज्वाल्य सप्तहस्तश्चतुः ६

शृंगः सप्तजिह्वो द्विशीर्षकः त्रिपाद् प्रसन्नवदनः सुखासीनः शुचिः स्मृतः स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा-
बिभ्रद् दक्षिण हस्तैस्तु शक्तिमन्नं स्त्रुचं स्रुवं तोमरं व्यजनं वामे घृतपात्रं च धारयेत् आत्माभिमुखमासीनमेवं रूपो हुताशनः
इति ध्यात्वा . समिद्‌द्वयमादायास्मिन् कर्मणि देवतापरिग्रहार्थमन्वाधानं करिष्ये इति संकल्प्य अस्मिन्नन्वाहितेऽग्नौ जात
वेदसमग्निमिध्मेन प्रजापतिं प्रजापतिं चाघारदेवते आज्येन अग्नीषोमौ चक्षुषी आज्येन ततः प्रधानदेवता द्रव्यं च कीर्त्य शे
षेण स्विष्टकृतमिध्मसंनहनेन रुद्रं अयासमग्निं देवान् विष्णुमग्निं वायुं सूर्यं प्रजापतिं च एताः प्रायश्चित्त देवताः आज्येन ज्ञाताज्ञा
त दोषपरिहारार्थं त्रिवारमग्निं मरुतश्चाज्येन यक्ष्ये प्रजापतये स्वाहेति समिद्‌द्वयं हुत्वेध्मा बर्हिषी चासाद्य. पवित्रे कृत्वा-
प्रोक्षणीं संस्कृत्योत्पूय पात्राण्युत्तानानि कृत्वा त्रिः प्रोक्ष्य प्रणीतापात्रे निधायोदकमासिच्य· गंधपुष्पादिनास्य ब्रह्माणं कृ
त्वा तूष्णीमुपविष्टे ब्रह्माणि ब्रह्मन्नपः प्रणेष्यामीति हस्त्वा प्रणयेत्यभ्यनुज्ञातः प्रणीतापात्रं स्थंडिलोत्तर भागे स्थापयेत्
ततः आज्यपात्रे पवित्रगर्भे आज्यं कृत्वा स्थंडिलादंगारान् उत्तरतो निधाय तत्र आज्यपात्रं निधाय प्रज्वालितैः कुशैस्त्रिः
पर्यग्निकृत्वा उल्मूकं प्रास्याप उपस्पृश्य आज्यमूर्ध्वीयांगारान्स्थंडिले प्राप्य पवित्राभ्यामाज्यमुत्पूय पवित्रे प्रोक्षणीष्वग्नौ प्रास्य पश्चा
दग्ने बर्हिः प्रागग्रमास्तीर्य तत्राज्यपात्रं संस्थाप्य सकुशं स्रुवं गृहीत्वा कुशाग्रैः स्रुवस्याग्रं बिलं संमृज्य आभ्यात्मं स्रुवस्य पृ

गा·का ष्वत्वं सम्मृज्य कुशमूलैर्दंडं सम्मृज्य प्रोक्षणीभिः स्रुवं प्रोक्ष्य प्रताप्य आज्यादुत्तरतः स्थापयेत् ततः स्रुमार्गकुशानग्नौ- प·प्र·
७ प्रक्षिपति ततोऽग्नये नम इति अग्निं संपूज्य इध्ममभिघार्यालंकृत्य जातवेदसमिध्मेन स्वात्मानं च समेधय प्रजया पशुभि २
श्चाग्ने त्वमस्मान्वर्धयस्व नः स्वाहेति इध्मां हुत्वा जातवेदस इदं न मम प्रजापतये स्वाहेतिव्याघारं हुत्वा अग्नये स्वाहा
सोमाय स्वाहेत्युत्तरतो दक्षिणतश्च जुहोति ततः प्रधानं हुत्वा अग्नये स्विष्टकृते स्वाहेति शेषं हुत्वा रुद्राय पशुपतये
इध्मसंनहनमग्नौ प्रक्षिप्यापः स्पृष्ट्वाज्यं जुहोति अग्नये आयसे स्वाहा देवेभ्यः स्वाहा विष्णवे स्वाहा अग्नये स्वाहा
वायवे स्वाहा सूर्याय स्वाहा प्रजापतये स्वाहेति हुत्वा प्रणीतापात्रं बर्हिषि स्थापयित्वा जलेनाभ्युर्य प्राच्यां देवा मार्जयंतां
प्रतिदिशमुत्क्षिप्य ततः अद्भ्यो नमः समुद्रे क्षिपामीति पत्न्यंजलौ पूर्णपात्रं निनीय बर्हिषि क्षिपेत् ततः विभूतिं धृ
त्वाग्निं संपूज्य विसृज्य नम इति चरुहोमे पात्रसादनकाले चरुस्थाली प्रोक्षणी स्रुक् स्रुव प्रणीताज्यपात्रे इध्मा बर्हिषि-
शूर्पकृष्णाजिनोलूखलमुसला निस्थापयेत् प्रणीताप्रणयनांते शूर्पे पवित्रे निधायाग्नये निर्वपामीति तस्यै तस्यै देव-
तायै चतुर्वारं प्रोक्षयेत् ततः कृष्णाजिनमास्तीर्य तत्रोलूखलं संस्थाप्य तत्र तंडुलान् कृत्वा मुसलेन त्रिरवहत्य शूर्पे निक्षि-
प्य परापूयं तंडुलान् प्रक्षिप्य प्रक्षाल्य स्थाल्यां चरुं श्रपयेत तत्र आज्यसंस्कारादि स्रुवं संमृज्य स्रुचं संमार्जयेत् आज्यो ७

त्तरत आसाद्य चरुं मभिघार्यो दगुद्वास्यां तराग्निमाज्यं च नीत्वां ,आज्या द्दक्षिणतो बर्हिषि स्थापयित्वा पुनरभिघारयेत् इ
धमं हवंना द्याज्य भागांते स्त्रुच्युपस्तीर्य चरोर्मध्यात् पूर्वार्धाच्चावदाय स्थाली हविरभिघार्य स्त्रुचि स्थितमरुतमभिघारयेत् त
तो वामपाणिं हृदि निधाय दक्षिणपाणिना स्त्रुचमादाय अग्नये स्वाहेति तस्यै तस्यै देवतायै जुहुयात् ततः स्विष्टकृदर्थं स्त्रु-
च्युपस्तीर्य चरोरुत्तरार्द्धे सकृदवदाय द्विरभिघारयेत् नात्र हविप्रत्यभिधारणं ततः स्विष्टकृतं हुत्वा रज्जुप्रासनात् पूर्वं वत्सामा
न्यं इति गागाभट्टकृते कायस्थधर्मदीपे सर्व होमसाधारण प्रयोगः अथ नवग्रह प्रयोगः कर्त्ता देशकालौ स्मृत्वा ममं
दुष्ट स्थानस्थित नवग्रह सूचित सकलारिष्ट निरसन द्वारा ग्रहाणामानुकूल्यार्थं नवग्रह मखं करिष्ये इति संकल्प्य तदंग-
गणेश पूजनं पुण्याहवाचनं मातृका पूजनं च कृत्वा ततो आचार्यन : कुंडमंडपं स्थंडिलं कार्यं अस्मिन्नवग्रह मखे अमुक
प्रवरान्विता मुक गोत्रोत्पन्नं आचार्यत्वामहं वृणे आचार्यस्त्वं यथा स्वर्गे शक्रादीनां बृहस्पतिः तथा त्वं मम यज्ञेस्मिन् आचा
र्यो भव सुव्रत ततः ब्रह्म वरणं कुर्यात् यथा चतुर्मुखो ब्रह्मा स्वर्ग लोक पितामहः तथा त्वं मम यज्ञेस्मिन् ब्रह्मा भव द्विजोत्त-
म ततः सदस्यं वृणीत ततः ऋत्विग्वरणं मंत्रः अस्य यागस्य निष्पत्यै भवंतः प्रार्थिता मया सुप्रसन्नाः प्रकुर्वंतु शांति
कं विधिपूर्वकं ततो आचार्यादीनां वस्त्रालंकारादि पूजनं कुर्यात् ततो यजमानः सपत्नीकः साचार्यः पूर्णकलशं हस्ते धृत्वा

तूर्यघोषादिनामंडपप्रदक्षिणांकुर्यात् मंडपदक्षिणतः स्वांयतनेयजमानः उपविशेत् ततो आचार्यः देशकालौसंकीर्त्य-
अस्मिन्नवग्रहमखे आचार्यत्वेनवृतोहं आचार्यकर्मकरिष्ये इतिसंकल्प्य चतुर्दिक्षुसर्षपान्विकिरेत् तत्रमंत्रः यदत्रसं
स्थितं भूतंस्थानमाश्रित्यसर्वतः स्थानंत्यक्त्वाततः सर्वं यत्रस्थंतत्रगच्छतु आपक्रामंतुभूतानिपिशाचाः सर्वतोदिशंसर्वेषाम
विरोधेन ब्रह्मकर्मसमारभेत् ततः पंचगव्येनभूमिंप्रोक्षयेत् ततश्चतुर्विंशत्यंगुलंमृदाचतुरस्रंस्थंडिलंपरिकल्प्य गोम-
येनोपलिप्य तत्पश्चिमभागे यज्ञियकाष्ठेनप्रादेशमात्रांउदगायतांरेखांकृत्वा दक्षिणोत्तरतः प्रागायतंरेखाद्वयंकृत्वा म
ध्येरेखात्रयंपरिकल्पयेत् मध्येयज्ञियकाष्ठंसंस्थाप्य प्रोक्ष्य प्राच्यांदिशित्यजेत् ततोअग्नेएहीत्यावाह्य वैश्वानरनमस्ते
स्तुहुताशस्वाहयासह देवानांप्रीणनार्थायएत्यत्रस्थंडिलेमम त्यग्निंप्रतिष्ठाप्य अत्रमहानसात् अग्निर्ग्राह्यः अग्निं-
ध्यानंकुर्यात् अथाग्निरूपंवक्ष्यामिसर्वाभीष्टफलप्रदं एकत्हृदयंद्विवक्त्रंचद्विनासिकंषडक्षरं त्रिमेखलंत्रिपादंचस-
प्तजिह्वाशिराकृतम् मेषारूढंचतुःशृंगंजटामुकुटमंडितं तोमरंव्यजनंवामे घृतपात्रंविशेषतः हविर्भुक्सलिलंदृष्ट्वा
भीतःप्रत्यङ्मुखोभवेत् सुदीप्तंस्वर्णवपुषंतुंगंपिंगललोचनं तवरूपमिदंदेव ध्यायेत्सर्वार्थसिद्धये स्थंडिलेशान-
भागेएकहस्तांद्विहस्तांत्रिहस्तांवाचतुरस्रांसमांवेदिंकृत्वा गोमयेनानुलिप्य तत्रसर्वतोभद्रदेवताआवाह्यपूजयेत् तत्ररे- ८

स्वाः प्राच्यमुदीच्यश्चांतत्ताः समाः कृत्वा नवकोष्टेषु पद्मानि कृत्वा श्वेत तंडुलैः प्रतिमास्तु नवग्रहपीठदेवताः स्थापयेत् प्रतिमाश्च सूर्यस्य
ताम्रीं स्फाटिकीं चंद्रस्य रक्तचंदनमयीं मंगलस्य सौवर्णीं बुधस्य बृहस्पतेरपि सौवर्णी राजतीं शुक्रस्य लोहमयीं शनैश्चरस्य सै
सीं राहोः केतोः सर्वेषां सौवर्णी चा तत्रमध्यकोष्टे वर्तुले द्वादशांगुले तंदुलादिना कृते मंडले श्वेततंडुलैः पूर्वाभिमुखं सूर्यं प-
द्मासनः पद्मकरो द्विबाहुः सप्तद्युतिः सप्ततुरंगवाहनः दिवाकरो लोकगुरुः किरीटी मयि प्रसादं विदधातु देव इति मंत्रेण स्थाप
येत् ततः अग्नेयकोष्टे चतुरस्त्रे सोमं श्वेतांबरः श्वेत विभूषणश्च श्वेत द्युतिर्दंडधरो द्विबाहुः चंद्रोमृतात्मा वरदः किरीटी श्रे
यांसि मह्यं प्रददातु देवः इत्यावाह्य दक्षिणकोष्टे त्रिकोणे भौमं रक्तांबरो रक्तवपुः किरीटी चतुर्भुजो मेषगमो गदाभृत् धरासुतः
शक्तिधरश्च शूली सदा ममस्याद्वरदः प्रशांतः इति। मंत्रेणावाह्य ततः ईशानकोष्टे बाणाकारे बुधं पीतांबरः पीतवपुः किरीटी चतुर्भु
जो दंडधरश्च धारी चर्मासिधृक् सोमसुतः सदा मे सिंहाधिरूढो वरदो बुधश्चेति मंत्रेणावाह्य उत्तरकोष्टे दीर्घचतुरस्त्रे गुरुं पीतांब
रः पीतवपुः किरीटी चतुर्भुखो देवगुरुः प्रशांतः दधाति दंडं च कमंडलुं च तथाक्षसूत्रं वरदोस्तु मह्यं इति मंत्रेणावाह्य पूर्वकोष्टे शुक्रं
श्वेतांबरः श्वेतवपुः किरीटी चतुर्भुखो दैत्यगुरुः प्रशांतः दधाति दंडं च कमंडलुं च जपं च बिभ्रद्वरदोस्तु मह्यं इति मंत्रेणावाह्य प
श्चिमकोष्टे धनुषाकारे शनिं नीलद्युतिः शूलधरः किरीटी गृध्रस्थितो बाणकरो धनुष्मान् चतुर्भुजः सूर्यसुतः प्रशांतो वरप्रदो मेस्तु

गा·कां· स्समंदगामीं इतिमंत्रेणावाह्य नैर्ऋत्यकोष्टेसूर्पाकारेराहुं नीलांबरोनीलवपुःकिरीटीकशलवक्रः करवालश्शूली श्चतुर्भुज प·अ·
९ श्चर्मधरश्चराहुः सिंहासनस्थोवरदोस्तुमह्यं इत्यावाह्य वायव्यकोष्टेध्वजाकारेकेतुं धूम्रोद्विबाहुर्वरदोगदाधाभृद्गृध्रा सनस्थोवि २
कृताननश्च किरीटकेयूरविभूषितांगः सदास्तुमेकेतुगणप्रशांतः इत्यावाह्य अधिदेवतास्थापयेत् :तत्रसूर्यदक्षिणपार्श्वे
रुद्रायनमइति मंत्रेणआवाह्य एवंसर्वत्रनाममंत्रेणावाहयेत् सोमदक्षिणपार्श्वेगौरीं भौमदक्षिणपार्श्वेस्कंदं बुधद-
क्षिणपार्श्वेनारायणं गुरुदक्षिणपार्श्वेब्रह्माणं शुक्रदक्षिणपार्श्वेइंद्रं शनिदक्षिणपार्श्वेयमं राहुदक्षिणपार्श्वेकालं केतुद
क्षिणपार्श्वेचित्रगुप्तं ततःप्रत्यधिदेवताः सूर्यवामपार्श्वेअग्निं सोमवामपार्श्वेअपः भौमवामपार्श्वेभूमिं बुधवामपार्श्वेविष्णुं
गुरुवामपार्श्वेइंद्रं शुक्रवामपार्श्वेइंद्राणीं शनिवामपार्श्वेप्रजापतिं राहुवामपार्श्वेसर्पान् केतुवामपार्श्वेब्रह्माणं ततोरवेरु-
त्तरतः विनायकंदुर्गांवायुमाकाशमश्विनौउत्तरेक्षेत्रपालंवास्तोष्पतिं ततःपूर्वादिक्रमेणइंद्रंअग्निंयमंनिर्ऋतिंवरुणंवायुं
कुबेरंईशानंपूर्ववन्नाममंत्रेणस्थापयेत् ततोरवेःपूर्वेशेषमावाहयामि सोमस्याग्नेवासुकिमावाहयामि भौमाग्नेतक्ष
कमावाहयामि बुधोत्तरेकर्कोटकमा॰ गुर्वग्रेपद्ममावा॰ शुक्रोत्तरेमहापद्ममा॰ शनिपश्चिमेशंखमावाह॰ राहोःपु ९
रःकंबलंमा॰ केतोःपुरःकुलिकमा॰ ततःपूर्वेअश्विन्यादिसप्तनक्षत्राण्यावा॰ विष्कंभादिसप्तयोगान् आ॰ बवबालवकर

णेआ॰ सप्तद्वीपान्आ॰ ऋग्वेदमा॰ दक्षिणेपुष्यादिसप्तनक्षत्राण्यावा॰ धृत्यादिसप्तयोगान्आ॰ कौलवतैतिलकरणे
आ॰ सप्तपातालान्आ॰ यजुर्वेदमावा॰ पश्चिमेस्वात्यादिसप्तनक्षत्राण्या॰ वज्रादिसप्तयोगान्आ॰ गरवणिज्यकरणेआ॰
सप्तसागरान्आवाहयामि विष्टिकरणमावा॰ भूराद्यान्सप्तलोकानावा॰ अथर्ववेदमावा॰ वायव्ये ध्रुवायनमः ध्रुवमावा
अरुंधतीमावा॰ ततोमध्यमप्रकाशगंगादिसप्तसरितःआ॰ सप्तकुलाचलान्आ॰ अष्टौवसून्आ॰ एकादशरुद्रान्आ॰ द्वादशादि
त्यान्आवा॰ एकोनपंचविंशान्मरुतःआ॰ षडृतून्आ॰ द्वेअयनेआ॰ पंचदशतिथीन्आ॰ द्वादशमासान्आ॰ षष्टिदशसंवत्स
रान्आ॰ सुपर्णान्आवा॰ नागान्विद्याधरान्आ॰ यक्षान्अप्सरसःआ॰ रक्षांस्यावा॰ भूतान्यावा॰ भूतमनुष्यान्आवाह॰ आवाहन
श्लोकैरेवग्रहान्ध्यात्वा षोडशोपचारैःसंपूज्य सूर्यायरक्तवस्त्रंगंध पुष्प गुडोदनंनैवेद्यं सोमायश्वेतवस्त्रंगंधपुष्पघृतपायसंनै
वेद्यं भौमायरक्तवस्त्रम् गंधपुष्पंसंयावंनैवेद्यं बुधायपिंगलवस्त्रंगंधपुष्पक्षीरपाष्टिकंनैवेद्यं गुरवेपिंगलवस्त्रंगंधपुष्पंदध्यो
दनंनैवेद्यं शुक्रायश्वेतवस्त्रंगंधपुष्पंघृतौदनंनैवेद्यं॰ शनयेकृष्णवस्त्रंगंधपुष्पंकृसरंनैवे॰ राहवेकृष्णवस्त्रंगंधपुष्पअजामांसंनै
वेद्यं केतवेधूम्रवस्त्रंगंधपुष्पंक्षीरोदनंनैवेद्यं नवग्रहैशान्यांकलशंसंस्थाप्य तत्रवरुणमावाह्यवरुणंप्रार्थयेत् कलशस्यमुखेवि
ष्णुःकंठेरुद्रःसमाश्रिता मूलेतत्रस्थितोब्रह्मा मध्येमातृगणास्मृताः कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा ऋग्वेदोथयजुर्वे

 दःसामवेदोह्यथर्वणः अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः अत्रगायत्रीसावित्रीशांतिःपुष्टिकरीतथा आयांतुममशांत्यर्थं 
१० दुरित क्षयकारकाः सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः आयांतुममशां॰ देवदानवसंवादे मथ्यमानेमहोदधौ उत्पन्नोसितदा २
कुंभविधृतोविष्णुनापुरा त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः त्वयितिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः शिवः स्वयंत्वमे
वासिविष्णुस्त्वंचप्रजापतिः आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः त्वयितिष्ठंतिसर्वेपियतःकामफलप्रदाः त्वत्प्रसादादि
मंयज्ञंकर्तुमीहेजलोद्भव सान्निध्यंकुरुदेवेशप्रसन्नोभवसर्वदा ततोन्वाधानंअन्वाहिताग्नौजातवेदसमग्निमिध्मेन प्रजापतिं
प्रजापतिंचाघारदेवते आज्येनअग्नीषोमौचक्षुषीआज्येन अत्रप्रधानं सूर्यंसोमंअंगारकंबुधंगुरुंशुक्रंशनिंराहुंकेतुं क्रमेण
अर्कपलाशखदिरापामार्गपिप्पलावदुंबरशमीदूर्वाकुशसमिद्भिः चरुतिलाज्याहुतिभिः अष्टसहस्रअष्टशताष्टविंशति
संख्याकाभिः तथा अधिदेवताप्रत्यधिदेवताः विनायकादिपंचदेवताः अष्टौलोकपालान्वास्तोष्पतिंक्षेत्रपालंअष्टाविं
शतिअष्टचतुरन्यतरसंख्याकाभिः शमिदूर्वाज्यतिलाहुतिभिः तथानवग्रहपीठेदेवताः एकैकयाज्याहुत्यायक्ष्ये शेषेण
स्विष्टकृतमिध्मसंनहनेनरुद्रं अयासमग्निंदेवान्विष्णुमग्निंवायुंसूर्यंप्रजापतिंएताःप्रायश्चित्तदेवताः आज्येनज्ञाताज्ञा १०
तदोषपरिहारार्थंत्रिवारमग्निंमरुतश्चाज्येनयक्ष्ये प्रजापतयेस्वाहेतिसमिद्द्वयंहुत्वा इध्माबर्हिषीसंनह्यपरिस्तीर्यपर्युक्ष्य

प्रोक्षणीं स्रुवं प्रणीतामाज्यपात्रं इध्मां बर्हिषीं चासाद्य पवित्रे कृत्वा प्रोक्षणीं समुत्पूय पात्राण्युत्तानानि कृत्वा त्रिः प्रोक्ष्य प्रणीतापा-
त्रे पवित्रे निधाय उदकमासिच्य गंधपुष्पादि प्रास्य ब्रह्माणं दृत्वा तूष्णीमुपविष्टं ब्रह्माणं ब्रह्मन् अपः प्रणेष्यामीति पृष्ट्वा प्रणयेत्यभ्यनु-
ज्ञातः प्रणीतापात्रं स्थंडिलोत्तरभागे स्थापयेत् ततः आज्यपात्रे पवित्रगर्भे आज्यं कृत्वा स्थंडिलादंगारानुत्तरतो निधाय तत्र आज्यपा
त्रं निधाय प्रज्वालितैः कुशैः त्रिः पर्यग्नि कृत्वा उल्मूकं प्रास्य अपस्पृश्य आज्यमुन्नीय अंगारान्स्थंडिले प्रास्य पवित्राभ्यामाज्यमुत्पूय पवित्रे प्रोक्ष्य अ
ग्नौ प्रास्य पश्चादग्नेर्बर्हिः प्रागग्रमास्तीर्य तत्राज्यपात्रं स्थाप्य सकुशं स्रुवं गृहीत्वा कुशाग्रैः स्रुवस्य बिलं संमृज्य अभ्यात्मं स्रुवस्य पृष्ठं सं
मृज्य कुशमूलैः दंडं संमृज्य प्रोक्षण्या अद्भिः स्रुवं प्रोक्ष्य प्रताप्य आज्यादुत्तरतः स्थापयेत् संमार्जनकुशानग्नौ प्रक्षिपेत् ततो अग्नये
नम इत्यग्निं संपूज्य इध्मामभिघार्य संपूज्य जातवेदस मिध्मेन त्वात्मानं च समेधय प्रजया पशुभिश्चाग्ने त्वमस्मान्वर्धय स्वनः स्वाहा
जातवेदस इदं न मम प्रजापतये स्वाहेति आघारौ हुत्वा. अग्नये स्वाहा सोमाय स्वाहेति उत्तरतो दक्षिणतश्च जुहोति ततः इदमुपकल्पि
तं समिच्चरु तिलाज्य द्रव्यं आदित्यादि नवग्रह देवताभ्यः न मम इति यजमानस्त्यजेत् ततो ऋत्विजैः पूर्वोक्तनवग्रह मंत्रैर्नाम मंत्रै
र्वा तत्संख्याक समिच्चरु तिलाज्याहुतिभिर्जुहुयुः अधिदेवतादीनां नाम मंत्रैरेव तत् तद्द्रव्याणि जुहुयुः होमांते अग्निं नवग्रह पीठ-
देवताश्च संपूज्य ततः अग्नये स्विष्टकृते स्वाहेति शेष द्रव्येभ्य हुत्वा रुद्राय पशुपतये नम इति इध्मसंनहनं अग्नौ प्रक्षिप्य अप

स्पृष्ट्वा आज्यंजुहोति अग्नये अयासेस्वाहा देवेभ्यःस्वाहा विष्णवेस्वाहा अग्नयेवायवे सूर्याय प्रजापतयेतिहुत्वा प्रणीतापा
त्रंबर्हिषिस्थापयित्वा जलेनापूर्य प्राच्यांदेवामार्जयंतां दक्षिणस्यां पितरःमार्जयंतां प्रतीच्यांग्रहाःमार्जयंतां उदीच्यामापओषधयोमार्जयं
तां इतितत्तद्दिशंउत्क्षिप्य ततः अद्भ्योनमः समुद्रेक्षिपामीतिपरस्यंजलौ पूर्णपात्रंनिनीयबर्हिषिक्षिपेत् ततोविभूतिंधृत्वा अग्निंनवग्रहपीठ
देवताश्चसंपूज्य बलिदानंकुर्यात् अग्निःपश्चिमतः पूर्वादिदिक्षुसदीपंमाषभक्तंबलिंनाममंत्रैर्दद्यात् तच्चेत्थं इंद्रायसांगायसपरि-
वारायसायुधायसशक्तिकायअमुंसदीपंमाषभक्तंबलिंसमर्पयामि भोइंद्रदिशंरक्षबलिंभक्षअमुंबलिंगृहाण ममसकुटुंबस्यआ
युःकर्त्ताक्षेमकर्त्ताशुभकर्त्ता शांतिकर्त्ता पुष्टिकर्त्ता तुष्टिकर्त्ताभव अग्नये यमाय निर्ऋतये वरुणाय वायवे सोमाय ईशानायबलिं
दद्यात् ततःपूर्वोक्तमंत्रेण वा सूर्यायसांगायसपरिवारायेत्यादि आधिदेवताप्रत्यधिदेवतासहितायआमुंसदीपंमाषभक्तबलिं
समर्पयामि भोसूर्यआमुंबलिंगृहाण ममशांतिर्भवेतिबलिंदत्वा एवंसोमाय अंगारकाय बुधाय बृहस्पतये शुक्राय शनैश्चरा
य राहवे केतवे तत्तन्मंत्रेणनाममंत्रेणवा बलिंदद्यात् एकस्मिन्पात्रे पुरुषाहारपरिमितंमाषभक्तबलिंसदीपंसफलंसतांबूलंसदक्षि
णाकंस्थापयित्वा क्षेत्रपालायसांगायसपरिवारायसायुधायसशक्तिकाय शाकिनीडाकिनीभूतप्रेतपिशाचादिपरिवारयुताय अमुं
सदीपंसफलंसतांबूलंसदक्षिणाकंमाषभक्तबलिंसमर्पयामि भोक्षेत्रपालअमुंबलिंगृहाण ममसकुटुंब॰ भवेतिततःशांतिरस्त्वि

ति इत्यादिनानलं क्षिपेत् ततः आचम्य पूर्णाहुतिं कुर्यात्॰ स्रुचि द्वादशगृहीतं चतुर्गृहीतं वाज्यं नारिकेलादि फलं सवस्त्रं सहि
रण्यं पंचरत्नसहितं स्थापयित्वा यजमानः सहकुटुंबः साचार्यो अग्नेः पश्चिमतस्तिष्ठन् वैश्वानरोग्निर्वसवोथ रुद्राः आदित्यसंज्ञा-
श्च शतक्रतुश्च सप्तस्वानघिरथाय एते तृप्यंतु रक्षंतु च मामजस्रं स्वाहेति मंत्रेण हुत्वा अग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्र-
तवे सप्तवेभ्यश्च न मम इति त्यक्त्वा वसोर्धारां हुत्वा अथाचार्यः सम्भृत्विक् यजमानं सपत्नीकं नूतनवस्त्रपरिहितं वाद्य मंगल घोषपूर्वकं
अभिषिंचेत् सुरास्त्वामभिषिंचंत्वित्यादिमंत्रैः स्वस्तिवाचन उक्तः अभिषिंचेत् ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः श्रेयः
संपादनं कुर्यात् आचार्यो यजमानहस्ते गंधाक्षतपुष्पफलमुदकं कुर्वन् शांतिरस्त्वित्यादि पठन् : पूर्वं मया भवन्नियोगेन यत्कृत
माचार्यकर्म तदुत्पन्नं यच्छ्रेयस्तत्तुभ्यमहं संप्रददे इति त्यक्त्वा एवमेव ऋत्विजः कुर्युः ततः यजमानो नवग्रहदानानि दद्यात् कृत
स्य नवग्रहमखस्य सांगतासंसिद्ध्यर्थं सूर्याय कपिलाधेनुं तन्निष्क्रयद्रव्यं वा दद्यात् तत्र मंत्राः कपिले सर्वदेवानां पूजनीयासि रो-
हिणी सर्वदेवमयी यस्मात्ततः शांतिं प्रयच्छ मे सोमाय शंखं पुण्यस्त्वं शंख पुण्यानां मंगलानां च मंगलं विष्णुना विधृतो नित्यमतः
शांतिं प्रयच्छ मे भौमाय रक्तमनड्वाहं धर्मस्त्वं वृषरूपेण जगदानंदकारक अष्टमूर्तेरधिष्ठानमतः शांतिं प्रयच्छ मे बुधाय सुवर्णं
हिरण्यगर्भगर्भ॰ गुरवे पीतवस्त्रयुगं पीतं वस्त्रयुगं यस्मात् वासुदेवस्य वल्लभं प्रदानात्तस्य मे विष्णुमतः शांतिं प्रयच्छ मे॰

 शुक्राय श्वेताश्वं विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः चंद्रार्कवाहनोनित्यमतःशांतिंप्रयच्छमे शनयेकृष्णांगां यत्त्वंपृथि 
 वीसर्वार्थधेनुः केशवसन्निभा सर्वपापहरानित्यं मतःशांतिंप्रयच्छमे राहवेलोहं यस्मादायसकर्माणितवधीनानी सर्वदा लांग 
लाद्यायुधादीनितस्माच्छांतिंप्रयच्छमे केतवे ब्रह्मणानिर्मितछागयस्मात्त्वंचव्यवस्थितः यानंविभावसोनित्यमतः शांतिः ततः आचार्यादीन्-
संपूज्य आचार्यायगांहिरण्यंच ब्रह्मणेवृषंऋत्विग्भ्योदक्षिणांअन्येभ्यश्च भूयसींसंकल्प्य प्रणीताविमोकादिविभूतिधारणां
तंकृत्वा यथा: प्रणीतापात्रंबर्हिषिस्थापयित्वा जलेनापूर्य प्राच्यांदेवाः मार्जयंतां दक्षिणांपितरः प्रतीच्यांग्रहाः उदीच्यांआप
ओषधयः इतिप्रतिदिशंउत्क्षिप्य ततःअग्नेनमः समुद्रंक्षिपामिति पश्चांजलौपूर्णपात्रंनिनीयबर्हिषिक्षिपेत् ततोविभूति
धारणंकृत्वा अग्निंविसर्जयेत् गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन इतिविसृज्य नव
ग्रहदेवतादिविसृजेत् यांतुदेवगणाःसर्वेपूजामादायपार्थिवीं इष्टकामप्रसिध्यर्थंपुनरागमनायच यज्ञोपकरणान्याचार्यायद-
द्यात् ततोब्राह्मणभोजनंसंकल्प्य स्वस्तिवाचनम् इतिगागाभट्टकृतेबालाजीप्रभुवर्यकारिते कायस्थधर्मदीपे नवग्रहमख
प्रयोगः ७ ॥ अथदुष्टरजोदर्शनशांतिप्रयोगः कर्त्तादेशकालौस्मृत्वा ममपत्न्याः प्रथमरजोदर्शने दुष्टनक्षत्रसूचित 
सकलारिष्टनिरसनार्थं शौनकोक्तां शांतिंकरिष्ये इतिसंकल्प्य तदंगंगणपतिपूजनं पुण्याहवाचनंमातृकापूजनंनांदीश्रा

र्थं कृत्वा ततो आचार्यादीन् वृत्वा आचार्यो देशकालौ संकीर्त्य आचार्यत्वेन वृतो हम् आचार्यकर्म करिष्ये इति संकल्प्य यदत्र सं-
स्थितं भूतं स्थानमाश्रित्य सर्वतः स्थानं त्यक्त्वा ततः सर्वं यत्र स्थं तत्र गच्छतु अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशं सर्वेषामवि
रोधेन ब्रह्मकर्म समारभेत् ततो पंचगव्येन भूमिं प्रोक्षयेत् देवा आयांतु यातु धाना अपयांतु विष्णो देवयजनं रक्षस्वेति प्रार्थयेत्
ततः चतुर्विंशत्यंगुलस्थंडिलं मृद्भिः परिकल्प्य गोमयेनोपलिप्य स्थंडिलस्य पुरतः कलशत्रयं स्थापयेत् तंडुलराशित्रयं कृत्वा
तदुपरि कलशत्रयं स्थापयेत् पूर्णपात्राणि तत्पश्चिमभागे यज्ञियकाष्ठेन प्रादेशमात्रां उदगायतां रेखां कृत्वा दक्षिणोत्तरतः प्रा
गायतं रेखाद्वयं परिकल्प्य. मध्ये रेखात्रयं परिकल्पयेत् मध्ये यज्ञियकाष्ठं संस्थाप्य प्रोक्ष्य प्राच्यां दिशि त्यजेत् ततो अग्न एहि इ-
त्यावाह्य वैश्वानर नमस्तेस्तु हुताश स्वाहया सह देवानां प्रीणनार्थाय तिष्ठात्र स्थंडिले मम त्वमग्नि प्रतिष्ठाप्य ध्यायेत् अथाग्नि
रूपं वक्ष्यामि सर्वाभीष्टफलप्रदम् द्विवक्त्रमेकहृदयं द्विनासं चपलेक्षिणम् त्रिमेखलं त्रिपादं च सप्तजिह्वाभिरावृतं मेषारूढं च
तुःशृंगं जटामुकुटमंडितम् दक्षिणे च चतुर्हस्तं वामभागे त्रिहस्तकं शक्तिरत्नं ध्रुवं चैव स्रुक्स्रुवौ दक्षिणे करे। तोमरं व्यजनं वा
मे घृतपात्रं विशेषतः हविर्भुक् सलिलं दृष्ट्वा भीतः प्रत्यङ्मुखो भवेत् सुदीप्तं स्वर्णवपुषं तुंगपिंगललोचनं तद्रूपमिदं देव ध्याये
सर्वार्थसिद्धये इति ध्यात्वा समिद्द्वयमादाय अस्मिन्दुष्टरजोदर्शन शांत्याख्ये कर्मणि देवता परिग्रहार्थमन्वाधानं करिष्ये इ-

तिमंकस्य अस्मिन्नन्वाहिते ग्नावित्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा अत्र प्रधानं ग्रहान् समिद्भिरष्टाष्टसंख्याकाभिरधिदेवता
याः एकैकया हुत्या भुवनेश्वरीं इंद्राणीं इंद्रं च अष्टाविंशत्संख्याकाभिः दूर्वातिलमिश्रगोधूमाहुतिभिः अष्टविंशतिसंख्याकाभि-
र्यक्ष्ये प्रजापतिमाज्येन शेषेण स्विष्टकृतमित्यादि संयोयक्ष्ये इत्यंतमुक्त्वा प्रजापतये स्वाहेति समिद्द्वयं हुत्वा इध्माबर्हिषी सं
नह्य परिसमुह्य परिस्तीर्य पर्युक्ष्य प्रोक्षणीं स्रुवं प्रणीता माज्य पात्रं इध्माबर्हिषी चासाद्य पवित्रे निधाय तदुदकमासिच्य गं
धपुष्पादि प्रास्य ब्राह्मणं वृणीत तूष्णीमुपविष्टे ब्राह्मणि ब्रह्मन्नपः प्रणेष्यामि इति पृष्ट्वा प्रणयेत्यभ्यनुज्ञातः प्रणीतापात्रं
स्थंडिलोत्तरभागे स्थापयेत् ततः आज्यपात्रे पवित्रगर्भे आज्यं कृत्वा स्थंडिलादंगारानुत्तरतो निधाय तत्र आज्यपात्रं निधाय
प्रज्वलिते कुशैः त्रिः पर्यग्नि कृत्वा उल्मुकं प्रास्य आपः स्पृष्ट्वा आज्यमुत्तार्य अंगारान् स्थंडिले निधाय पवित्राभ्यामाज्यमुत्पूय
पवित्रे प्रोक्ष्य अग्नौ प्रास्य पश्चादग्नेर्बर्हिः प्रागग्रमास्तीर्य तत्राज्यपात्रं संस्थाप्य सकुशं स्रुवं गृहीत्वा कुशाग्रैः स्रुवस्य बिलं
संमृज्य अभ्यात्मं स्रुवस्य पृष्ठं संमृज्य कुशमूलैर्दंडं संमृज्य प्रोक्षणीभिरद्भिः स्रुवं प्रोक्ष्य प्रताप्य आज्यादुत्तरतः बर्हिषि स्थापये
त् ततः संमार्जनान्कुशान् अग्नौ प्रक्षिपेत् ततो अग्नये नम इत्यग्निं संपूज्य इध्ममभिघार्य संपूज्य जातवेदसमिध्मेन स्वात्मा
नं च समेधय प्रजया पशुभिश्चाग्ने त्वमस्मान् वर्धयस्व नः स्वाहा इति इध्मं हुत्वा जातवेदस इदं न मम (प्रजापतये स्वाहेति आघा

रोहुत्वा अग्नयेस्वाहा सोमायस्वाहा इतिइध्मंहुत्वाजातवेदस इदंनमम) प्रजापतयेस्वाहेतिआघारौहुत्वा अग्नयेस्वाहा
सोमायस्वाहा ततःउत्तरतोदाक्षिणतश्चजुहोति ततःइदंउपकल्पितंतत्तद्देवतायैनममेतियजमानस्त्यजेत् ततोऋत्विजःस्वा
हांतैर्नमोंतैर्नाममंत्रैर्जुहुयुः समिद्भिः सूर्यायस्वाहा २८ सोमाय० २८ भौमायस्वाहा २८ बुधायस्वा० २८ बृहस्पतये० २८ शु
क्राय० २८ शनैश्चराय० २८० राहवे० २८ केतवे २८ अधिदेवताप्रत्यधिदेवतागणपत्यादिलोकपालांताःहुत्वा दूर्वाभिः
भुवनेश्वर्यै० २८इंद्राण्यै० २८ इंद्राय० २८ शेषेणास्विष्टकृतेस्वाहा इध्मसंनहनेनरुद्रायस्वाहा अयासमग्नयेदेवेभ्यः वि
ष्णवेस्वाहा अग्नये० वायवे० सूर्याय० प्रजापतयेस्वाहा आज्येन अग्नयेत्रिमरुद्भ्यः ततः दिक्पालेभ्योभुवनेश्वर्यादिभ्यो
सदीपान्माषभक्तबलिंदद्यात् इंद्रायसांगायसपरिवारायसायुधायसशक्तिकाय अमुंसदीपंमाषभक्तबलिंसमर्पयामि
भोइंद्रदिशंरक्षबलिंभक्ष अमुंबलिंगृहाणममसकुटुंबस्य आयुःकर्त्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्ताभव. एवं अग्न
ये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० सूर्याय० सोमाय० भौमाय० बुधाय० बृहस्पतये० शुक्राय०
शनैश्चराय० राहवे० केतवे० भुवनेश्वर्यै० इंद्राण्यै० इंद्राय० सदीपंमाषभक्तबलिंदद्यात् क्षेत्रपालायचबलिमेवंदद्यात्
कलशोदकैःसपत्नीकंयजमानंऋत्विजंस्त्रिषुतः अभिषिंचेयुः सुरास्त्वामभिषिंचंत्वित्यादिपूर्ववत् अभिषिंचेत् ततोस्नातो

यजमानः आचार्याय गां सदस्याय दक्षिणां ब्रह्मणे वृषं ऋत्विग्भ्यः परितोषिकीं दक्षिणां दत्वा आवाहितदेवताः संपूज्य
अग्निंविसृज्य गच्छगच्छ॰ यांतु देवगणाः स॰ ब्राह्मणभोजनसंकल्पं कुर्यात् कर्मईश्वरार्पणंच कुर्यात् ॥ ॥
इतिश्री गागाभट्टकृते बाळाजीवर्यकारिते कायस्थधर्मदीपे दुष्टरजोदर्शनशांतिप्रयोगः समाप्तः ॥ अथगर्भाधानप्रयोगः
कर्ता देशकालौ स्मृत्वा अस्यां मम भार्यायां जनिष्यमाण सर्वगर्भाणां बीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं ग
र्भाधानं करिष्ये इत्युक्त्वा तदंगत्वेन गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धम् आचार्यवरणंच कुर्यात् आ
चार्यः देशकालौ संकीर्त्य आचार्यत्वेन वृतोहं आचार्यकर्म करिष्ये इतिसंकल्प्य तदंगस्थंडिलाद्यग्निप्रतिष्ठापनादि कुर्या
त् समिद्द्वयमादाय पुनर्देशकालौ स्मृत्वा घकरिष्यमाणे गर्भाधानहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये अस्मिनन्वा
हितेग्नावित्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा अत्रप्रधानं विष्णुं त्वष्टारं प्रजापतिं धातारं सिनीवालीं सरस्वतीं अश्विनौ
पर्जन्यं एताः प्रधानदेवताः आज्येन शेषेण स्विष्टकृतमित्यादि पूर्ववदुक्त्वा प्रजापतये स्वाहेति समिद्द्वयं हुत्वा इध्माब-
र्हिषा चासाद्य पवित्रकरणाद्याज्यभागांतं कुर्यात् ततः प्रधानदेवताः आज्याहुतीर्दद्यात् तन्नाममंत्रैरेव यथा विष्णवे
स्वाहा त्वष्ट्रे स्वाहा प्रजापतये स्वाहा धात्रे सिनीवाल्यै॰ अश्विभ्यां॰ पर्जन्याय॰ शेषेण स्विष्टकृतं इध्मसंनहनेन रु-

द्राय॰ अयासमग्नये॰ देवेभ्यो॰ विष्णवे॰ अग्नये॰ वायवे॰ सूर्याय॰ प्रजापतये॰ अग्नये॰ मरुभ्यः॰ प्रणीतापात्रंब
र्हिषिस्थापयित्वा जलेनापूर्य प्राच्यांदिशिदेवा मार्जयंतां दक्षिणस्यांपितरः॰ प्रतीच्यांग्रहाः॰ समुद्रेक्षिपामीति पत्न्यंजलौ-
पूर्णपात्रंनिनीय बर्हिषिक्षिपेत् ततोविभूतिधारणमग्निपूजनंकृत्वाग्निंविसर्जेत् ततोआलंकृतोयजमानः नवदूर्वा
धृत्वा अश्वगंधारसंभार्यायादक्षिणनासाविलेसेचयेत् तत्रमंत्राः विश्वावसो महाभागमनसात्वांस्तुवीमहि उदी-
र्ष्वयोनिमिच्छंति पत्यास मृजसिंचतामिति वादित्रादिघोषयुक्तःसूर्यंनमस्कुर्यात् ततोरात्रौशय्यायां विष्णवेनमः त्व
ष्ट्रेनमः प्रजापतये॰ धात्रेन॰ सिनीवाल्यैनमः सरस्वत्यै॰ अश्विभ्यां॰ पर्जन्यायनम इति योनिमभिमृश्य सकृद्गच्छे-
त् ऋतोगमनोत्तरंस्नायात् स्त्रीणांनस्नानं शयनादुत्थितानारी शुचिःस्याद्शुचिःपुमान्. इतिवचनात् अनृतौतुमूत्र-
वच्छौचाचमने .युग्मासुपुत्राजायंते.आयुग्मासुच कन्यकाः इति गागाभट्टकृते बाळाजीप्रभुवर्यकारितेकायस्थधर्मदीपे
गर्भाधानप्रयोगः अथपुंसवनं द्वितीयेवामासेपुंनक्षत्रंकृत्वाभ्यंगंकृत्वा देशकालौस्मृत्वा :अस्यांमम भार्यायां
जनिष्यमाणगर्भस्यपुंरूपताप्राप्त्यर्थं बीजगर्भसमुद्भवैनोनिबर्हणार्थंच परमेश्वरप्रीत्यर्थं पुंसवनमवलोभनंचकरिष्ये इ
तिसंकल्प्य .गणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राध्धमाचार्यवरणंचकुर्यात्. आचार्यःस्थंडिलाद्यग्निप्रतिष्ठापनंकु

गा॰ का॰ यैत् समिद्वयमादाय पुनर्देशकालौ स्मृत्वा अस्मिन्पुंसवनाख्ये कर्मणि देवतापरिग्रहार्थमन्वाधानं करिष्ये इति संकल्प्य अ- प॰ प्र
१५ स्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा अत्र प्रधानं प्रजापतिमग्निमाज्येन शेषेण स्विष्टकृतमित्यादि पूर्ववदु- २
क्त्वा प्रजापतये स्वाहेति समिद्द्वयं हुत्वा इध्माबर्हिषी सनन्य परिस्तीर्य पर्युक्ष्य प्रोक्षणीं स्रुवं प्रणीतामाज्यपात्रं इध्माबर्हिषी
चासाद्य पवित्रकरणाद्याज्यभागांतं कुर्यात् ततः प्रधानदेवतामाज्याहुतिं दद्यात् तत्र नाममंत्रैः प्रजापतये स्वाहा॰ अग्नये
स्वा॰ शेषेण स्विष्टकृतादि होमशेषं समापयेत् ततो अलंकृतो यजमानः नववस्त्रधरः अलंकृत समानवर्णवत्सायाः गोर्द-
धि पत्न्या दक्षिणपाणौ दत्वा मध्ये प्रागग्रं यवं द्वौ माषौ पार्श्वयोर्दत्वा किंपिबसीति स्पृष्ट्वा तथा पुंसवनमिति त्रिरुक्त्वा प्राशीया
त् एवं त्रिः कुर्यात् ततो दूर्वारसं भार्याया दक्षिणनासापुटे अग्नये प्रजापतये इति मंत्रेण सिंचेत् इति गागाभट्ट कृते बा-
ळाजी प्रभु नामक कारितें कौस्तुभ धर्मदीपे पुंसवनानवलोभनप्रयोगः ६ अथ सीमंत प्रयोगः चतुर्थे षष्ठेऽष्टमे वा मासि प्रा
ग्वा प्रसवात्पुंनक्षत्रे कर्ता देशकालौ संकीर्त्य ममास्यां भार्यायां जनिष्यमाण सर्वगर्भाणां बीजगर्भसमुद्भवैनो निरसन द्वारा प्र
तिगर्भ संस्कारातिशयार्थं श्रीपरमेश्वरप्रीत्यर्थं च सीमंतोन्नयनं करिष्ये इति संकल्प्य तदंग गणपतिपूजनं पुण्याहवाचनं मातृ- १५
कापूजनं नांदीश्राद्धं आचार्यवरणं च कुर्यात् आचार्यास्थंडिलाद्यग्निप्रतिष्ठापनादि कृत्वा समिद्द्वयमादाय पुनर्देशकालौ स्मृ

त्वा करिष्यमाणे सीमंतोन्नयनाख्य होमे देवता परिग्रहार्थमन्वाधानं करिष्ये इति संकल्प्य अस्मिन्नन्वाहितेग्नावित्यादि चक्षु
षी आज्येनेत्यंतमुक्त्वा अत्र प्रधानं धातारं राकां प्रजापतिं अष्टाज्याहुतिभिः प्रजापतिमाज्येन शेषेणस्विष्टकृतमित्यादि पूर्ववदु
दुक्त्वा प्रजापतये स्वाहेति समिद्द्वयं हुत्वा इध्माबर्हिर्मीसंनत्य परिसमूह्य परिस्तीर्य पर्युक्ष्य प्रोक्षणीं स्रुवं प्रणीतामाज्य पात्रं
इध्माबर्हिषी चासाद्य पवित्रकरणाद्याज्यभागांतं कुर्यात् आचार्यः प्रधानहोमं कुर्यात् धात्रेस्वाहा ८ राकायै ८ प्रजापत-
ये॰ शेषेणस्विष्टकृतादि होमशेषं समापयेत् ततोलंकृतो नववस्त्रधरः यजमानः त्रिशुक्लशलली कुशत्रययुतां उदुंबरफलगुच्छ
युक्तामादाय पश्चात्स्थित्वा प्रजापतये नम इति मध्यादारभ्योर्ध्वं द्विधा केशान्कृत्वा त्रिः सीमंतं कुर्यात् ततो नीराजनं तदंते फल
लड्डुकादि दत्वा. विप्रेभ्यो दशामांन्नानि दक्षिणां च दद्यात् विप्रक्षत्रिययोः कुर्याद्विवासीमंतकर्म च वैश्यशूद्रयोश्चैतद्विवानेष्यंति
केचनेन. इति गागाभट्टकृते बालाजी प्रभु वर्य कारिते कायस्थधर्मदीपे सीमंतोन्नयनप्रयोगः ६७ अथ जातकर्मप्रयोगः
प्रादुर्भूते पुत्र पुत्र्यो श्चंद्रसूर्यग्रहे तथा स्नात्वानंतरमात्मीयान्पितॄंश्राद्धेन तर्पयेत् कुमारे जाते नाभिच्छेदात् प्रागपि सचैलं स्नानं
कृत्वा देशकालौ संकीर्त्य अस्य कुमारस्य गर्भांबुपानजनितदोषपरिहारार्थं जातकर्म करिष्ये इति संकल्प्य गणेशपूजनं पु-
ण्याहवाचनं मातृकापूजनं नांदीश्राद्धं कुर्यात् आज्यमधुनी हेम्ना प्राशयित्वा कर्णयोर्निधाय देवाय सवित्रे नमः सरस्वत्यै नमः

गा·का· अभिभ्यांनमः . इत्यक्त्वा असौअभिमृश्य इंद्रायनमः इत्युक्त्वांविप्रान्पूजयेत् इतिगागाभट्टकृतेकायस्थधर्मदीपेजा प·प्र·
१६ तकर्मप्रयोगः ५ अथषष्ठीपूजनं मिताक्षरायांमार्कंडेयःरक्षणीयंस्तथा षष्ठीनिशातत्रविशेषतः रात्रौजागरणंका २
र्यं जन्मदानांतथाबलिः पुरुषाःशस्त्रहस्ताश्चनृत्यगीतैश्चयोषितः रात्रौजागरणंकुर्युः दशम्यांचैवसूतके व्यासः सूतिका
वासनिलया जयदानामदेवताः तासांयागनिमित्तांतुशुद्धिर्जन्मनिकीर्तिता प्रथमेदिवसेषष्ठेदशमेचैवसर्वदा त्रिष्वेतेषुनकु-
र्वीतसूतकंपुत्रजन्मनि अपरार्केब्राह्मे कन्याश्चतस्त्रोराकाद्यावातघ्नीचैवपंचमी क्रीडनार्थायबालानांषष्ठेचशिशुरक्षणी
खड्गेतुपूजनीयावैवैश्यैर्ब्राह्मैर्द्विजातिभिः राकाअनुमतीसिनीवालीकुहूरिति चतस्त्रःकन्याइत्यर्थः पितादेशकालौस्मृत्वाम
मास्यशिशोः सर्वारिष्टशांत्याआयुरारोग्यसिद्ध्यर्थं गणेशपूजनंजन्मदाजीवंतिकाराकादीनांपूजनंकरिष्ये इतिसंकल्प्य क
लशंसंस्थाप्य तत्रपूर्णपात्रंनिधाय तदुपरिवस्त्रंतदुपरिगणेशं जन्मदांजीवंतिकांस्कंदंराकांअनुमतीं सिनिवालींकुहूंबा
लघ्नींचप्रतिमास्वावाह्य खड्गेशिशुरक्षणींलिखितांषष्ठीआवाह्यषोडशोपचारैःसंपूज्य माषभक्तादिबलिंदत्वा प्रार्थयेत्
गौरीपुत्रोयथास्कंदः शिशुत्वेरक्षितःपुरा तथाममाप्ययंबालःषष्ठीकेरक्ष्यतांत्वयेति ५ इतिगागाभट्टकृतेकायस्थधर्मकुलप्र १६
दीपेषष्ठीपूजा ५ अथदत्तकपुत्रविधिः वर्धमानहरिहरादयः संबंधतत्वकारमाश्रित्य अग्न्याद्याहुतिहोममात्रेणापिद

त्तकोभवतीति कायस्थानामपि दत्तकोभवति तदादौ कर्ता देशकालौ स्मृत्वा दत्तकविधिना दत्तकं करिष्ये इति संकल्प्य गणे
शपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं आचार्य वरणंच कुर्यात् आचार्यं वृत्वा अस्मिं दत्तकविधिकर्मणि होमे देवतापरिग्रहा
र्थं अन्वाधानं करिष्ये . अस्मिन्नन्वाहितेग्नावित्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा अत्र प्रधानं अग्निं वायुं सूर्यं प्रजापतिं सोमं गंधर्वं
वरुणाय यक्ष्ये शेषेणस्विष्टकृतमित्यादि पूर्ववदुक्त्वा प्रजापतये स्वाहेति समिद्द्वयं हुत्वा इध्माबर्हिषि संनह्य परिसमूह्य परिस्तीर्य प
र्युक्ष्य चरुस्थालीं प्रोक्षणीं दर्वीं स्रुवं प्रणिताम् आज्यपात्रं इध्माबर्हिषी चासाद्य पवित्रकरणाद्याज्यभागांतं कुर्यात् ततश्चरुणा
प्रधानहोमं कुर्यात् अग्नये स्वाहा. ८ वायवे. ८ सूर्या. ८ प्रजापतये. सोमाय. ८ गंधर्वाय. ८ शेषेण स्विष्टकृदादिहोमशेषं समा-
पयेत् ततो अलंकृतो यजमानः आचार्यान् सदस्यादीन् संपूज्य ब्राह्मणेभ्यो आमान्नानि भूयसीं दक्षिणांच दद्यात् इति श्रीनाग
भट्टकृते बालाजी प्रभुवर्यकारिते कायस्थधर्मप्रदीपे दत्तकविधिः समाप्तिमगमत् . अथ सूतिकास्नानं ज्योतिषे करौद्रभाग्या-
निलवासवांत्यं. नवमेन्हि पुंसां तिथावरिक्ते शुभमामनंति प्रसूतिकास्नानविधिं मुनींद्राः अथ नामकर्म मदनरत्ने बृहस्पतिः द्वाद
शे दशमे वापि जन्मतोपि त्रयोदशे षोडशे विंशतौ चैवं द्वात्रिंशे वर्षतः क्रमात् नारदीये सूतकांते नामकर्म विधेयं स्वकुलोचितं
नामकुर्यात्तु बालस्य मंगलस्य समाक्षरैः तत्रैव गार्ग्यः मासनाम गुरोर्नाम दद्यात् बालस्य वै पिता कृष्णोनंतोच्युतश्चक्री वैकुंठो

थजनार्दनः उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् अत्रमार्गशीर्षादिः चैत्रादिर्वा
क्रमइतिमदनरत्ने नाक्षत्रमपिनामकार्यंनक्षत्रसंबंधपितानामकुर्यादिति नत्रोक्तशंखोक्तेः परिशिष्टेपि नदाक्षरादिकंनामय
स्मिन्धिष्ण्येयदक्षरं अथपितादेशकालौस्मृत्वा अस्यकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणार्थंनामव्यवहारसिद्ध्यर्थंचनामक
रणांचकरिष्ये इतिसंकल्प्य तदंगभूतंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंकुर्यात् ततःकांस्यपात्रेतंडुलपूर्णहे-
म्नागणेशनामततः कुलदेवतानामततोमासनामततोनक्षत्रंततोव्यवहारिकंशिवादिनामलिखित्वा नामदेवताःसंपूज्य शिशोर्दक्षि
णकर्णेअमुकभक्तोअमुकनामासि इत्यादिनामनिरुक्तातिष्ठन्कृतांजलिः कुलदेवतानाम्नाआमुकनाम्नाभवंतः सर्वान्ब्राह्मणान्
अभिवादयेत् आयुष्मान्भव त्वमुकनामाइतिविप्राब्रूयुः एवमेवव्यवहारिणेननाम्नेत्यादिवाच्यं ततः शतंदशवाआमांन्नानि
विप्रेभ्यःदद्यात् दक्षिणांचदत्वा विप्रेभ्योआशिषोगृण्हीयात् मंत्राः यावद्वीचीतरंगान्वहतिसुरनदीजान्हवीपुण्यतोयायाव-
त्याकाशमार्गेतपतिदिनकरोभास्करोलोकपालः यावद्वज्रेंदुनीलस्फटिकमणिशिलावर्ततेमेरुशृंगेतावत्त्वंपुत्रपौत्रीस्वजनपरिवृ
ताजीवशंभोःप्रसादात् आशीर्वादाः सफलाःसंतुपूर्णाःसंतुमनोरथाः शत्रूणांत्वद्धिनाशोस्तुमित्राणामुदयस्तव इत्याशिषाः १७
इतिश्रीगागाभट्टकृतेबाळाजीप्रभुवर्यकारितेकायस्थधर्मदीपेनामकर्मप्रयोगः ७ अथदोलारोहः पारिजातेबृह

स्पतिः दोलारोहस्तु कर्तव्योदशमे ह्रदशोपिवा ज्योतिर्निबंधे गर्गः आंदोलाशयने पुंसो द्वादशो दिवसः शुभः त्रयोदशस्तु कन्यायान
नक्षत्रविचारणा. करत्रये वैष्णवरेवतीषु दितिद्वये चाश्विनक ध्रुवेषु कुर्याच्छिशूनां नृपतेश्चवतद्दांदोलनं वैस्करविनो भवेति ७
अथ कर्णवेधः ज्योतिर्निबंधे गर्गः मासे षष्ठे सप्तमे वाप्यष्टमे मासि वत्सरे कर्णवेधं प्रशंसंति पुष्ट्यायुः श्रीविवृद्धये मदनरत्ने वसिष्ठः
मासे षष्ठे सप्तमे वा वेध्यो कर्णौ द्वादशे षोडशेन्हि हेमाद्रौ व्यासः कार्तिके पौष मासे वा चैत्रे फाल्गुनकेपिवा कर्णवेधं प्रशंसंति शुक्ले
पक्षे शुभे दिने सचमृगरोहिणी हस्तचित्रापुनर्वसुपुष्य श्रवण धनिष्ठा रेवतीषु रिक्तावर्ज तिथौ कार्यः मदनरत्ने सौवर्णी राजपुत्रस्य रा
जती विप्रवैश्ययोः शूद्रस्य चायसी सूचिर्मध्यमाष्टांगुलात्मिका अथ प्रयोगः उक्तकाले पूर्वाण्हे मध्यान्हे वा मातुरुत्संगे लंकृतं शि
शुमुपवेश्य विष्णुशिवब्रह्मचंद्रसूर्यदिगीशानासत्यसरस्वतीं कुलदेवताः संपूज्योक्तसूच्या कर्णवेधं कुर्यात् चंडेश्वरः सार्धमास
द्वये दद्यात्ताबूलं प्रथमं शिशोः अथ निष्क्रमणं ज्योतिर्निबंधे यमः तृतीये वा चतुर्थे वा मासि निष्क्रमणं भवेत् मनुः मासे चतुर्थे कर्त
व्यं शिशोर्निष्क्रमणं बुधैः षष्ठेन्नप्राशनं मासि तच्चेष्टं मंगलं कुले अत्र शिशुक्तिर्न तु द्विजोक्तिः तेनैतदन्येषामपीति मेधातिथिः मदन
रत्ने बृहस्पतिः अन्नप्राशनकाले वा कुर्यान्निष्क्रमणक्रियां विष्णुधर्मोत्तरे दिगीशानां दिने तत्र तथा चंद्रार्कयोर्द्विज पूजनं वासुदेवस्य
गगनस्य च कारयेत् बहिर्निष्कासयेत् गेहाच्छंखपुण्याहनिःस्वनैः अथ पिता व्रेशकालैः स्मृत्वास्य शिशोर्बीजगर्भसमुद्भवैनोनिबर्ह

गा॰ का॰ णद्वारा बलायुर्वर्चोभिवृद्ध्यर्थं निष्क्रमणं करिष्ये इति संकल्प्य गणपति पूजनं स्वस्ति वाचनं मातृका पूजनं नांदीश्राद्धं कुर्यात् ततः प्र- प॰ प्र॰
१८ तिमास्वक्षत पुंजेषु चंद्रादि दिक्पालांश्चंद्रसूर्य देवगगनानां नामभिरावाहनादि पूजां कृत्वा शंख तूर्य मंगलस्वनैः सूर्यचंद्र धेनूनां दर्श- २
नं कारयित्वा पठेत् चंद्रार्कयोर्दिगीशानां दिशां च गगनस्य च. निक्षेपार्थमिदं दद्मि ते मे रक्षंतु सर्वदा अप्रमत्तं प्रमत्तं वा दिवारात्रम-
थापि वा रक्षंतु सततं सर्वे देवाः शक्रपुरोगमाः तनोऽथ विप्राः करोतु स्वस्ति ते ब्रह्मेत्यादि आशिषं दद्युः इति श्रीगागाभट्टकृते बाळा-
जी प्रभुवर्यकारिते निष्क्रमणप्रयोगः ७ अथोपवेशनं प्रयोगपारिजाते पाद्मे पंचमे च तथा मासि भूमौ तमुपवेशयेत् तत्र
सर्वे ग्रहाः शस्ता भूमौ प्यत्र विशेषतः विष्णुधर्मोत्तरे वराहं पूजयेद्देवं पृथिवीं च तथा द्विजान् अथ पित्रादेशकालौ स्मृत्वास्य कुमा-
रस्य सर्वारिष्ट शांत्यायुरारोग्य क्षेमार्थमुपवेशनं करिष्ये इति संकल्प्य गणेशपूजनं स्वस्ति वाचनं मातृका पूजनं नांदीश्राद्धं कुर्या-
त् ततः पीठे प्रतिमायां पूजयोर्वा वराह पृथिवींच नाम्ना षोडशोपचारैः संपूज्य तदग्ने भूमौ पंचसप्त वा धान्यपूजां वस्त्रे कृत्वा करो-
तु स्वस्ति ते ब्रह्मेत्याद्यैराशिषो दद्युः धान्योपरि शिशुमुपवेश्य मृत्युंजयं स्मृत्वा भस्मना रक्षां कृत्वा पठेत् रक्षैनं वसुधे देवि सदा सर्व-
गतं शुभे. आयुः प्रमाणं सकलं निक्षिपस्व हरिप्रिये अचिरादायुषस्त्वस्य ये केचित्परिपंथिनः जीवितारोग्यवित्तेषु निर्दहस्वा- १८
चिरेण तान् धरणाशेष भूतानां माता त्वमसि कामधुक् अजरा चाप्रमेया च सर्व भूत नमस्कृता चराचराणां भूतानां प्रतिष्ठाचा-

ष्ययंत्वसि कुमारं पाहिमांतनस्त्वं ब्रह्मातदनुमन्यतामिति अत्रैक्ककटिसूत्रं बंधयेत् शिष्टास्त्वन्नप्राशनदिने एवनिष्क्रामसुपवेशनंच कु
र्वंति ॰ इतिश्री नागोभट्टकृते बाळाजीप्रभुवर्यकारिते कायस्थधर्मदीपे उपवेशनप्रयोगः ॰ ७९ अथान्नप्राशनं मदनरत्ने नारदः षष्ठेवा
ष्यष्टमे कार्यं नवान्नेप्राशनं शुभे लौगाक्षिः षष्ठान्नप्राशनं जातेषुवा विष्णुधर्मोत्तरे ब्रह्माणं शंकरं विष्णुं चंद्रार्कौ च दिगीश्वरान् भूतं-
दिशश्च संपूज्य हुत्वा वन्हौ तथा चरुं देवतापुरतस्तस्य धात्र्युत्संगगतस्य च अलंकृतस्य दातव्यमन्नपात्रे सकांचनं मध्वाज्यदधिसंयु
क्तं प्राशयेत्पायसं तु वा अथ पित्ता देशकालौ स्मृत्वा ऽस्य शिशोर्बीजगर्भसमुद्भवेनोविनाशद्वारा बलायुर्वर्चोऽभीष्ट ध्यर्थमन्नं प्राशनं करि
ष्ये इति संकल्प्य तदंगं गणपतिपूजनं स्वस्तिवाचनं मातृकापूजनं नांदीश्राद्धं आचार्यवरणं च कुर्यात् ॰ आचार्यस्थंडिलोल्लेपनोल्लेखना-
द्यग्निप्रतिष्ठाग्निध्यानं कुर्यात् सोमिद्धयमादाय पुनर्देशकालौ स्मृत्वा करिष्यमाणेन्नप्राशनहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये अस्मि
न्नत्वाहितेग्नावित्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा प्रधानं ब्रह्माणं शंकरं विष्णुं चंद्रार्कौ दिक्पालान् भूमिं दिशश्च वरुणान्यस्ये शेषेणस्वि
ष्टकृतमित्यादि सद्यो यक्ष्ये इत्यंतमुक्त्वा प्रजापतये स्वाहेति समिद्द्वयं हुत्वा परिसमूहनादि पूर्णपात्रनिधानांतं कृत्वा तत्र शूर्पस्थित तंडुला
न्स्थाल्यां मूत्त चतुरश्चतुरो मुष्टीन् एकैकस्यै देवतायै निर्वपेत् ब्रह्मणे त्वा सेव्यमानं निर्वपामि इत्येवं चतुर्वारं शंकराय त्वा सेव्यमानं निर्वपामि एवं
चंद्राय अर्काय इंद्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे सोमाय ईशानाय भूम्यै दिग्भिः सेव्यमानं निर्वपामीति निर्वाप्य त्रिः प्रक्षाल्य चरुं

 

श्रपयित्वा अभिघार्यस्तंडुलादुत्तरतोउत्तार्यअभिघार्यआज्याद्दक्षिणतस्थापयेत् ततः इध्माधाना द्याज्यभागांतंकुर्यात् ततइदमुप
कल्पितंद्रव्यंतस्यैदेवतायैयजमानस्त्यजेत् ब्रह्मणेस्वाहा॰८ शंकराय॰८ विष्णवे॰८ चंद्राय॰८ अर्काय॰८ वृंदाय॰८ अग्नये॰८
यमाय॰८ निऋतये॰८ वरुणाय॰८ वायवे॰८ सोमाय॰८ ईशानाय॰८ भूम्यै॰८ दिग्भ्यः प्रतिदैवतंचरुद्रव्येण अष्टौ अष्टौ आहुत-
योजुहोति शेषेणस्विष्टकृतादिहोमशेषंसमापयेत् ततःदधिमधुघृतमन्नपायसंच प्राशयित्वा तांबूलंचदत्वारत्नहेमविभाजनानि
अग्रेनिधाययद्बालःस्पृशेत् सास्यजीविकेतिपरिक्षयेत् अन्नप्राशनं इतिश्रीगागाभट्टकृते बाळाजीप्रभुवर्यकारिते कायस्थधर्मदीपे
अन्नप्राशनप्रयोगः ७. अथाब्दपूर्तिः गौडव्यवहारनिर्णये नवांबरधारोभूत्वापूजयेच्चचिरायुषं मार्कंडेयनरोभक्तःपूजयेत्प्रयत
स्तथा तत्रोदीर्घायुषंव्यासंरामंद्रौणिंकृपंबलिं प्रल्हादंचहनूमंतंविभीषणमथार्चयेत् अस्यनक्षत्रंजन्मतिथिंप्राप्यसंपूजयेन्नरः
षष्टिंचदधिभक्तेनवर्षेवर्षेपुनःपुनः तिथितत्वेतन्नाम्नातिलहोमोप्युक्तः आदिपुराणे सर्वैःस्वजन्मदिवसेस्नातेर्मंगलवारिभिः गुरु
देवाग्निविप्राश्चपूजनीयाःप्रयत्नतः स्वनक्षत्रंचपितरस्तथादेवःप्रजापतिः प्रतिसंवत्सरंयत्नात्कर्तव्यश्चमहोत्सवः कृत्यचिंतामणौ गु
डदुग्धतिलान्दद्यात्हस्तेग्रंथीचबध्नीयात् गुग्गुलंनिंबसिद्धार्थादूर्वागोरोचनादिकं संपूज्यमातृविघ्नेशौमहर्षिप्रार्थयेदिदं जन्मतिथि
श्चौदयिकीग्राह्या तदुक्तंकृत चिंतामणौस्कांदे युगाद्यावर्षवृद्धिश्चसप्तमीपार्वतीप्रिया रवेरुदयमीक्षंतेनतत्रातिथियुग्मतेति अ

थपितासबालोभ्यंगंकृत्वा॰ नववस्त्रधरोदेशकालौस्मृत्वा अस्यशिशोः दीर्घायुरारोग्यार्थंवर्षवृद्धिदिनकृत्यंकरिष्ये इत्युक्त्वा प्रतिमा
स्वक्षतपुंजेषुवा गणेशंसूर्यंमार्कंडेयंव्यासंपरशुरामं अश्वत्थामानंकृपंबलिंप्रल्हादंहनुमंतंविभीषणं षष्ठींस्वनक्षत्रंपितरोप्रजापतिं गुरुमग्निंचसंपूज्य॰ शूलपाणिमतेतन्नाम्नातिलहोमंचकृत्वा गुग्गुलंनिंबसर्षपदूर्वारोचनागुडानांपोडलींहस्तेबध्वा मार्कंडेयंप्रार्थयेत् चिरजीवियथात्वंभो भविष्यामितथामुने रूपवान्वित्तवांश्चैवश्रियायुक्तश्चसर्वदा मार्कंडेयनमस्तेस्तुसप्तकल्पांतजीवन आयुरारोग्यसिद्ध्यर्थंप्रसीदभगवन्मुने चिरजीवयथात्वंतुमुनीनांप्रवरद्विज कुरुष्वमुनिशार्दूलतथामांचिरजीविनं मार्कंडेयमहाभागसप्तकल्पांतजीवन आयुरारोग्यसिद्ध्यर्थमस्माकंवरदोभव पितात्वेनमितिंवदेत् ततोगुडमिलयुतंदुग्धमादाय सतिलंगुडसंमिश्रंअंजल्यर्धमितंपयः मार्कंडेयाद्वरंलब्ध्वापिवाम्यायुर्विवृद्धये इतिपिबेत् ततोगुडदेवविप्रःपूज्याः तिथितत्वेस्कांदे खंडनंनखकेशानांमैथुनापगमौतथा अमिषंकलशंहिंसांवर्षवृद्धौविवर्जयेत् तत्रैवकृतांतकुंडयोर्वारेयस्यजन्मतिथिर्भवेत् अनृक्षयोगसंप्राप्तौविघ्नस्तस्यपदेपदे कृतांतःशनिः जन्मनक्षत्रयोगेनदोषः तस्यसर्वौषधिस्नानंगुरुदेवाग्निपूजनं अथवर्धापनेविशेषो भविष्ये मासिप्रविष्टेप्रथमेबालवर्धापनंबुधैः राज्ञांचैतन्मुनिश्रेष्ठसमांतेचविधीयते बालानांमाससमाप्तौ अन्येषांसमांतेवर्षांते इत्यर्थः कुमुदामाधवीगौरीरुद्राणीपार्वतीउमा कालीसरस्वतीचैवसावित्रीब्रह्मणःप्रिया सैतीसंज्ञातथामेधापुष्टितुष्टिसमन्विता न्तृ

गा॰का॰ पडिंभपरित्राणाज्जीवंतीनामषोडशी पूजनीयाः प्रयत्नेनशूर्पमध्येविलिख्यतु रजनीपिष्टतोवापिलिखेद्वाकुंकुमेनतु हरिद्रारजनीगं ष॰प्र॰
२० धैः पुष्पैःस्रगंधैश्चदीपरत्ननिवेदनैः पूजनीयास्तुसंस्थाप्यकुंकुमाद्याः पृथक्पृथक् नामाभिस्थापनीयास्ताः पूजयित्वातुबालकं पूजयि २
त्वाअलंकृत्वा पूजयन्मातृपितरौबालवर्धापनेसति पुरोधाः पूजयेत्ब्रह्मन्राजवर्धापनेविधौ कुमुदाद्याःसमुद्दिश्यवंशपात्राणिक
ल्पयेत् एकैकस्याधनाक्ष्यस्तुदद्यात्षोडशषोडश तदर्धानितदर्धानिद्वेद्वेकैकमथापिवा बहुपक्वान्नमुक्तानिबहुपुष्पफलानितु स्रुवासि
नीभ्योविप्रेभ्योदद्याद्भक्तिपुरःसरैः प्रीयतांकुमुदाद्यामेबालकायुर्विवर्धिनीः॥ बलेनयशसातुष्टाबलमेवर्धयंतुवै प्रयच्छंतुतथा
रोग्यंसौख्यंसौभाग्यमेवच नाममंत्रेणदेवानांअर्घ्यंताभ्यःप्रदापयेत् वस्त्रतांबूलपुष्पादि दिनेतास्मिन्प्रकल्पयेत् स्रुवासिनीनांदे-
यंतुकुमुदाप्रीयतामिति यःपूजयेत्भक्तिपुरःसरंहिसहेमपूर्णबलंवृद्धियुक्तः इतिश्रीगागाभट्टकृतेबाळाजीप्रभुवर्यकारितेकायस्थ
धर्मदीपे अब्दपूर्तिप्रयोगः ७ अथचौलं तृतीयेवर्षेयथाकुलधर्मवाकार्यं बृहस्पतिः उत्तरायणगेसूर्येपक्षयोःशुक्लकृष्णयोः
कृष्णोंत्यपंचदिवसान्वर्जयित्वाशुभःस्मृतः वसिष्ठः द्वित्रिपंचमसप्तम्यामेकादश्यांतथैवच दशम्यांचत्रयोदश्यांकार्यंक्षौरंद्विजन्मनां
अन्या निषिद्धाः वाराःशस्तानरक्षौरेसोमज्ञगुरुभार्गवाः हस्ताश्विपौष्णश्रवणधनिष्ठादित्यपुष्यभे सौम्यचित्रेनवक्षौरेउत्तमानवता २०
रकाः जन्मनक्षत्रस्यनिषिद्धत्वात् विन्नेतिज्ञेयं त्रीण्युत्तराणिकाश्यपव्यंरोहिणीवारुणंतथा क्षौरषण्मध्यमाःप्रोक्ताशेषाद्वादशगर्हिताः

वसिष्ठः गर्भेमातुःकुमारस्यनकुर्यात् चौलकर्मच पंचमासाद्धोकुर्यात् अतऊर्ध्वंनकारयेत् नारदः पंचाब्दात्प्रागतोर्ध्वंतुगर्भि-
ण्यामपिकारयेत् सहोपनीत्याकुर्याच्चेत्सदादोषोनविद्यते इदंचनांदीश्राद्धोत्तरमपिमातूरजोदर्शनेकार्यं मातुरंगत्वात् षष्ठेब्देषोड-
शेवर्षेविवाहाब्देनयेच्च अंत्यर्वत्स्यांचजातायांनेष्यतेमुंडनंक्वचित् इतिनिषेधाच्च मुंडनंपुत्राब्दे विवाहइतिमंडनोपलक्षणं कुले
ऋतुत्रयादर्वाक् मंडनंनतुमुंडनं• प्रवेशेनिर्गमेनेष्टोनकुर्यान्मंगलत्रयमितिकात्यायनोक्तेः अथचौलप्रयोगः कर्तादेशकालौस्मृत्वा
ममास्यशिशोः बीजगर्भसमुद्भवैनोनिबर्हणद्वाराबलायुर्वर्चोभिवृध्यर्थंचौलाख्यसंस्कारकर्मकरिष्ये इतिसंकल्प्य तदंगभूतंगण
पतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंआचार्यवरणंचकरिष्ये इतिसंकल्प्य कुर्यात् पुनर्देशकालौस्मृत्वाकरिष्यमाणहोमे
चौलंकर्त्तुस्थंडिलादिकरिष्ये इतिसंकल्प्य• अग्निंप्रतिष्ठाप्य अग्निंध्यात्वाअन्वाधानंकुर्यात् अस्मिन्नन्वाहितेग्नावित्याघारावाज्येने-
त्यंतमुक्त्वा अत्रप्रधानंत्रिवारमग्निंपवमानंप्रजापतिं अग्निंवायुंसूर्यंप्रजापतिंचाज्येन• शेषस्विष्टकृतमित्यादिआघारांतंकुर्यात् प्रधान
होमंकुर्यात् प्रधानदेवते अग्नयेपवमानायस्वाहेतित्रिवारंजुहुयात् प्रजापतयेस्वाहा अग्नयेस्वाहा वायवेस्वा॰ सूर्याय॰ प्रजापतये
स्वा॰ इतिजुहुयात् (प्रजापतयेस्वाहा अग्नये॰ वायवे॰ सूर्यायस्वा॰ प्रजापतये॰ इतिजुहुयात्) ततः शीतोष्णोदकधाराद्वयंएकस्मिन्
पात्रेकुर्यात्··कुंतलानांक्षौरविधौकुमारारोग्यसिद्धये अदितिंसंस्मरन्कुर्यात् शीतोष्णोदकधारकेतिमंत्रेण ·ततोनवनीतेनदध्ना-

वादिनयेनमइतिप्रदक्षिणंशिरउदेत् ततो धृतैकविंशतिकुशपिंजूलमध्येंपिंजूलत्रयदक्षिणेगोदानेनिधाय अदितयेनमइति सकेशा
न्कुशान्छिनति सोमस्यापिवरुणस्यापि सवितायेनचावपत् ब्राह्मणस्तेनवपतंकुमारारोग्यवृद्धयेइतिछित्वा सकेशान्कुशा
न्शमीपर्णैस्तदभावेपुष्पैः सहमातुरंजलौनिदधाति सातानडुहचर्मस्थितानानडुहगोमययुक्तशरावेनिदधाति एवंदक्षिणेगोदा-
नेचतुर्वारंकरोति उत्तरेगोदानेचतुर्वारंकरोति उत्तरेगोदानेत्रिः एवमेवविंशतिकुशपिंजूलसमाप्तिः ततोयथासौस्फभगैः केशैः क्षु
रः संशोधतेभुवि आयुरारोग्यसंपत्त्यायथासंशोभतादयं इतिक्षुरधारांनिमृज्य शीतोष्णोदकेनवपनंकुर्वीत नापितंवदेत् त
तः कुलाचारानुसारेणशिखांरक्षयित्वा मुंडनंकुर्यात् ततः कृतमंगलस्नानंकुमारंसमीपेउपवेश्य स्विष्टकृतादिहोमशेषंसमा
प्यब्राह्मणेभ्योदक्षिणांदत्वाआशिषयेत् इतिगागाभट्टकृतेकायस्थदीपेचौलकर्मप्रयोगः ७ उपनयने मासतिथिनक्षत्रा
णिनिषिद्धानि शौनकः जन्ममासनिषेधेतुदिनानिदशवर्जयेत् तृतीयापंचमीषष्ठीद्वितीयाचापिसप्तमी पक्षयोरुभयोश्चैव-
विशेषेणसुपूजिताः ममकसंग्रहः अनध्यायेथतत्पूर्वापक्षयोश्चगलग्रहे अष्टकायुगमन्वादिप्रदोषस्यादिनेतथा भूकंपोल्कातु
दर्शनेकुर्यान्मौजीबंधनं तेनसप्तमीनवमीद्वितीयाचतुर्थीत्रयोदश्योनिषिद्धाः षष्ठ्यांद्वादश्यांचप्रदोषेसापि कृष्णपक्षेचतुर्थीचसप्तम्या
दिदिनत्रयं त्रयोदशीचतुष्कंच अष्टावेतेगलग्रहाः तेनक्वचित्प्रतिपदादिविधिः पुनरुपनयस्यनिमित्तानंतर्यलोपेतद्विषयोज्ञेयः ए

वंचैत्रवैशाखशितत्रुतीयायामाघसप्तम्याश्च युगमन्वादिनिषिद्धानांविधिरपिशिष्टास्तु तत्रकुर्वंतिसर्वेषांजीवशक्ताकावाराः प्रोक्तावते
षु ·भानिनक्षत्राणित्र्युत्तरेसुरोहिण्याहस्तेमैत्रेचवासवे त्वाष्ट्रसौम्यपुनर्वस्व त्र्युत्तमंत्र्युत्तरायनं बृहस्पतिः ज्योतिषेहस्तत्रयेपुष्य
धनिष्ठयोश्चपौष्णाश्विसौम्यादितिविष्णुभेषुपुनर्वसुविधिरापस्तंबः अथोपनयनं आश्वलायनं गर्भाष्टमेष्टमेवाब्देपंचमेसप्तमेपि
का विष्णुः षष्ठेतुधनकामस्यविद्याकामस्यसप्तमे अष्टमेसर्वकामस्यमौंजीबंधनमिष्यते तस्यकालोदगयनपूर्वपक्षपुण्याहेषु
देवाविति सूत्रेणषष्ट्याध्याये. जैमिनिवाड्व्यः माघादिषुपंचमासेषु मौंजीपंचकशस्यते मिथुने संस्थितोभानौज्येष्ठमासेनदोषकृत् अ-
नुजन्मविषयस्तत्सूत्रगृहण्णं निषेधस्त्वन्यशाखिनां अथप्रयोगः तत्रादौशक्तोशक्त्यानवग्रहमखः कार्यः तत्रपिता आचार्योवास्ना-
तः स्वलंकृतः सपत्नीकः कुमारःपीठासनेउपविश्यनत्वाविष्णुंसंस्मृत्य देशकालौसंकीर्त्य अस्यकुमारस्य आचारोपदेशद्वारास्वजा
तिविहितकर्माद्विसिध्यर्थं उपनयनाख्यंकर्मकरिष्ये इतिसंकल्प्य तदंगगणपतिपूजनंस्वस्तिवाचनंमातृकापूजनंनांदीश्रा
द्धं मंडपदेवतास्थापनंचकरिष्ये इतिसंकल्प्य. नांदीश्राद्धांतं कृत्वासूत्रवेष्टितसमित्कुशगर्भाश्वपत्रेषु नंदिनीः नलिनी· मै-
त्रा उमा पशुवर्धनी भगवती· संवाह्यपूज्यस्थापयेत् मृन्मयकलशद्वयेचूर्णलेपितेपक्वान्नहिरण्यपूरितेनारीकेलेनकच्छपि
हितं अविघ्नगणपतिं आवाह्यपूज्यस्थापयेत् ततउपरिवितानंद्वारेचतोरणानिबध्नीयात्· ततः कर्ताउपनयनाधिकारसिध्यर्थं कृ

कृच्छ्रत्रयंप्रायश्चित्तंकरिष्ये गोदानद्वारा तन्मूल्यद्वारा वा कुमारोपि देशकालौस्मृत्वा ममकामचारकामवादकामभक्षणजनितप्रत्यवा-
यपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं कृच्छ्रत्रयंप्रायश्चित्तंकरिष्ये इतिसंकल्प्य नर्थैवातिर्यक्कुमारहस्तेनचतुर्हस्तांपंचहस्तांवामृ-
न्मयींवेदींकृत्वा तस्यादक्षिणभागे अग्निस्थापनं अष्टादशांगुलंतंडुलचूर्णेनस्थंडिलंकृत्वा तदुत्तरभागे द्रोणा तदर्धार्धमिति तंडु-
ले हस्तद्वयमितं हस्तमितं वामतोरम्यंचतुरस्रं नानारंगयुतंमंडलंकृत्वा तत्कौपीनंपरिधानार्थं कटिसूत्रंअहतंवासआवरणार्थं-
वासो अजिनं धनुर्ज्यामेखलांतदभावे अश्मंतकमेखलांउत्तरीयमुपवीतं औदुंबरंदंडंचस्थापयेत् ततोज्योतिर्विदुक्ते शुभे मु-
हूर्ते तस्यांवेद्यांकर्ताप्राङ्मुखोपविश्य पश्चिमाभिमुखंकुमारं आसनाग्रेउपविश्य अंतः पटं धृत्वा शुभे मुहूर्ते तन्मुखं निरि-
क्ष्यकुमारकंस्थापयेत् ततोविप्राः करोतुस्वस्तिते ब्रह्मेत्यादिमंत्रान्पठित्वा अक्षता कुमारोपरि प्रक्षिपेयुः ततः कर्ताकुमारस्य
दक्षिणतः उपविश्य देशकालौस्मृत्वा अस्यकुमारस्यकरिष्यमाणे उपदेशे होमंकर्तुंस्थंडिलोल्लेपनादिसर्वंकर्मकरिष्ये इ-
तिषट्पात्रप्रयोगेन आज्यसंस्कारांतंकृत्वा कुमारस्यकटिसूत्रंबध्वाकौपीनंपरिधाप्य अहतंवासःपरिधापयति शरण्यंसर्व-
लोकानांलज्जायारक्षणंपरं सुवेषधारिवस्त्रमतःशांतिंप्रयच्छमे इतिमंत्रेणवस्त्रंधृत्वा ततोऽजिनंचक्षुर्मित्रस्यवरुणंतेबलीयस्तेज
उत्तमं जरिष्णुं वसनंनित्यमजिनंधारयाम्यहं इत्यजिनंधृत्वा ततोयज्ञोपवीतं प्रक्षाल्यहरिद्रया अनुरज्यकुमारायदद्यात् परब्रह्मादि

देवत्यंपवित्रंपरमंस्मृतं प्रजापतेर्यत्सहजमुपवीतंदधाम्यहं इतिमंत्रेण दाक्षिणहस्तमुद्धृत्य कंठेधारयेत् आत्मानमग्निंचांतरा
कुमारमुत्तरेनीत्वा आचमेत् केशवादिनमोनारायणायनमोमाधवायनमेत्याचम्यत्रयेण कार्यं गोविंदायविष्णवेकरौक्षालनं मधुसू
दनायत्रिविक्रमायेति ओष्ठौउपरिमृज्य वामनायश्रीधरायेति अधः निमृज्य हृषीकेशायेति वामे उदकंगृहीत्वा तेनोदकेन नखानि च
त्वकंस्पृशेत् पद्मनाभायेति पादौस्पृशेत् दामोदरायेतिशिरसि संकर्षणाय वासुदेवायेतिनासापुटौ प्रद्युम्नाय अनिरुद्धायेति च-
क्षुषि पुरुषोत्तमाय अधोक्षजायेति श्रोत्रद्वये नारसिंहायेतिनाभिं अच्युतायेति हृदये जनार्दनायेति कंठे उपेंद्रायेतिशिरसि
हरयेकृष्णायेतिबाहौ केचित्तु आत्मतत्वायेतिस्वाहेतिप्रथमं विद्यातत्वायस्वाहेतिद्वितीयं शिवतत्वायस्वाहेति तृतीयं तूष्णीं
मार्जनंकुर्वंति ततो बर्हिरास्तरणादि आघारांतं कृत्वा कुमारेणान्वारब्धः अग्नयेपवमानायेतिभिः प्रजापतये अग्नये वायवेसूर्या
य प्रजापतये इत्यष्टाहुतीर्हुत्वा अग्नयेरुत्तरतः कुमारं प्राङ्मुखमवस्थाप्य स्वयंप्राङ्मुखस्तिष्ठेत् ततः सहिरण्यं कुमारांजलौ स्व
यंजलमापूर्य सहिरण्यंचांजलिमन्येन पूर्तिं धारयेत् एवंत्रिः कृत्वा सवित्रेनम इति सूर्यप्रजापतयेत्वा परिददामीति कुमारं प्रजापति
देवताकंमनसा ध्यायेत्ततः कुमारोऽग्नेः पश्चादुपविश्य तूष्णींसमिधमादाय जलेन स्करंत्रिर्मृज्य अग्नयेनम इति अग्निमुपस्थाय अग्निं
नत्वा आचार्यंवस्त्रालंकारादिभिः स्तोषयित्वा आचार्यपादौ धृत्वा उपदेशं कुरु इति प्रार्थयेत् गुरुः कुमारांजलिंस्वांजलिना सह वस्त्रेण-

वेष्टयित्वागुरुः कुमारमस्तकोपरिवस्त्रंदत्वाकुमारस्यदक्षिणकर्णेस्वमंत्रंत्रिरुपदिशेत् ततःकुमारः तंमंत्रंआवधार्यतेजोरूपंकर्णवर्त्मना
हृदिमविष्टंमनसाध्यायेत् ततः आचार्योमेखलामाबध्य तत्रमंत्रः प्रजयापशुभिश्चैवर्संनत्थामिधृतेचन औषधीभिश्चपय
स्वादीक्षितास्त्वंस्मेधिमा इतिमेखलामंत्रः ततः दंडंधृत्वा आदांतंदमयित्वाच मार्गेसंस्थापयन्स्वयम् दंडः करेधृतोयस्मात्त
स्माद्रक्षयतोभयं इतिमंत्रेणदंडंप्रदायमभव्रतमुपदिशेत् तद्यथा स्वकर्मकुरु उर्ध्वाधरोच्छिष्टयोशौचाचमनंकुरु नित्यंस्नानादिकं
कुरु दिवामास्वाप्सीः गुरोरधीनोभवमंत्रानुसंस्थानशीलनपरोभव ततः नवीनकांस्यपात्रंगृहीत्वा भिक्षांभवतिददात्विति मातरंअ
न्यांवा अप्रत्याख्यायिनींभीक्षांयाचयेत् ताभिर्भिक्षात्वेनदत्तंतंडुलादिकंगुरवेदद्यात् ततोब्राह्मणान्संपूज्य शतंयथाशक्तिभोजये-
द्वा आमान्नंनिसंकल्प्य भूयसींदत्वाकर्मेश्वरार्पणंकुर्यात् ततश्चतुर्थेहनिगणेशंसंपूज्य कुशस्तंबं अष्टोन्यावनानिदत्वाआवाहि
तमंडपदेवतानामुद्वासनंकुर्यात् इतिगागाभट्टकृतेकायस्थधर्मप्रदीपेउपनयनोपवीतधारणप्रयोगः ६९ ६९ ६९

अथश्रावणीपौर्णमास्यांविहितरक्षाबंधनोपवीतधारणप्रयोगः श्रावण्यांपौर्णमास्यांश्रवणनक्षत्रयुक्तायां तदभावेश्रव
णनक्षत्रंउक्तं पंचम्यांहस्तयुक्तदिनांतरेवातत्कार्यं श्रावणीपौर्णिमासीचेत्ग्रहसंक्रांतियुक्तातदानकार्यं बहुराचम्यप्राणानाय २३
म्य आचार्याग्रेउपविश्य आचार्योदेशकालौस्मृत्वा करिष्यमाण आचार्योपदेशोआचारोपदेशानिर्विघ्नतासिध्यर्थंश्रावणीतयाचरक्षा

बंधनकर्मकरिष्ये इतिसंकल्प्य अस्मिन्कुर्तुंस्थंडिलोल्लेपनादिकरिष्ये इति अग्निप्रतिष्ठापनांते अस्मिन्कर्मणि देवतापरिग्रहार्थ-
मन्वाधानमित्यादिवक्ष्यमाणदेवता आज्येन अक्षतैश्च रुणावाशेषेण स्विष्टकृतमिष्ट्वाज्यभागांतं कृत्वा सावित्र्यैनमः ब्रह्मणे
नमः श्रद्धायै. मेधायै. प्रज्ञायै. धारणायै. सदसस्पतये. अनुमतये. ऋषिभ्यः इति आज्येन हुत्वा अक्षतैर्जुहुयात् अग्नये
अनृणस्तूर्येभ्यः अग्नये. शकुंतायै. अग्नये. मित्रावरुणाभ्यां. अग्नये. अद्भ्यः अग्नये. मरुद्भ्यः अग्नये. विश्वेभ्योदेवेभ्यः
अग्नये. इंद्रासोमाभ्यां. अग्नये. इंद्राय. अग्निमरुद्भ्यः. पवमानसोमाय. सोमाय. अग्नये. संज्ञानायेति. नमोंतैः स्वाहांतैर्वानाममंत्रैः
अक्षतांहुत्वा नित्यब्रह्मयज्ञंविधाय जलाशयेगत्वागणस्नानंकरिष्ये इतिसंकल्प्य स्नात्वा भस्मादाय- ईशानायनम इतिशिर-
सि तत्पुरुषायनमइति मुखे अघोरायनम इतिहृदये. वामदेवायनम इतिगुह्ये. सद्योजातायनमइति पादयोः ब्रह्मणेनम इति सर्वां
गेस्नात्वा ततोगोमयमादाय अग्रमग्रंचरंतीनामोषधीनांवनेवने तासामृषभपत्नीनांपवित्रंकायशोधनं तन्मेरोगांश्चशोकांश्चनु
दगोमयंसर्वदा सर्वांगेसंलिप्य स्नात्वा ततोभूम्यैनम इति भूमिंप्रार्थ्य तूष्णींस्नात्वा मृदमादाय मृदुपरिकुशांदूर्वांचदत्वा स्वमं
त्रेणाभिमंत्र्य इंद्रायनमः यमाय. वरुणाय. सोमाय. इतिपूर्वादिप्रतिदिशंसूर्यायेत्यूर्ध्वं अनंतायेत्यधः क्षिप्त्वा कृष्णायनम
इतिमूर्ध्नि. संकर्षणायनम इतिमुखे. अनिरुद्धायनम इत्यक्ष्णोः वासुदेवायनम इतिनासिकयोः अधोक्षजायनम इतिकर्णयोः पुरु

षोत्तमायनमइतिग्रीवायां मत्स्यायनमइत्यंसयोः कूर्मायनमइतिबाह्वोः जनार्दनायहृदये कमलनाभायनाभौ मलापहारका
यकक्षयोः वामनायनमः कुक्ष्यौ विष्णवेनमःपृष्ठे गोविंदायनमइत्यूर्वोः मधुसूदनायनमः गुह्ये पद्मनाभायनमः पादयोः
माधवायनमः हस्तयोः हृषीकेशायेतिसर्वांगेष्वनुलेपयित्वा ततः सरितः सागराः शैलास्तीर्थानिजलदानदाः एतेत्वामभिषिंचंतु
सर्वकामार्थसिद्धये इतिकुशोदकेनस्नात्वा आचम्य२ त्वंराजासर्वतीर्थानांत्वमेवजगतःपिता याचितंतीर्थंमेदेहिसर्वपापैः प्र
मुच्यते इतितीर्थंप्रार्थ्य जलमध्येयथाशक्तिप्राणंनासिकांधृत्वा स्नात्वाचम्य ब्रह्मादिदेवांस्तर्पयामीतित्रिः सव्येन निवीती
सनकादिमनुष्यांस्तर्पयामीतित्रिः प्राचीनावीती अग्निष्वात्तसोमयमाग्निंकव्यवाहनपितृंस्तर्पयामीत्रिः इत्येवंस्नानांगतर्प
णंविधाय मृदावेदींकृत्वा तत्रप्रतिमाफलाक्षतापुंजान्यतमेषु कश्यपं. अत्रिं. भरद्वाजं. विश्वामित्रं. गोतमं. जमदग्निं. वसिष्ठं. अरुं
धतींचावाह्यपूजयित्वा सव्येन कश्यपंतर्पयामीतिएवमरुंधत्यंतं तर्पयित्वा सावित्रींतर्पयामीत्यादिहुतदेवतानांतर्पणंकृत्वा यमंतर्प-
यामि धर्मराजं॰ मृत्युं॰ अंतकं॰ औदुंबरं॰ दध्नं॰ नीलं॰ परमेष्ठिनं॰ वृकोदरं॰ चित्रं॰ चित्रगुप्तं॰ इतितर्पयित्वा यमोनिहंतापितृधर्म-
राजोवैवस्वतोदंडधरश्चकालः भूताधिपोदत्तकृतानुसारीकृतांतमेतद्दशभिर्जपंति १ इतिश्लोकं दशवारंजपेत् ततोमहागत्यस्थंडिले-
ग्निंप्रतिष्ठाप्यान्वाध्यात् अस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतं अत्रप्रधानं सावित्रींब्रह्माणमित्याद्याज्येनेत्यंतं अग्निंअन्न

णसूर्यानित्याादि संज्ञा नामा: प्रधानदेवता दधिसक्तुद्रव्येण शेषेणस्विष्टकृतं यज्ञोपवीतेन परमात्मानं इध्मांसन्न हनेनरुद्र मित्यादि आ
ज्यभागांते सविश्व्यादिभ्य आज्याहुती हुत्वा अग्नयेनमः अरुणसूर्येभ्योनम इति अवदान धर्मेण दधिसक्तून् हुत्वा अग्नयेस्विष्टकृते
हुत्वा प्राजापत्यायतः प्रोक्ताः संस्रवोवैष्णवंदधि प्राश्नामि दधिसक्तूंश्च प्रीयतांमे प्रजापतिः इति मंत्रेण दधिसक्तून् प्राश्य कुशैर्मार्जयि
त्वा अवदान धर्मेण यज्ञोपवीतमवदाय परमात्मनेनम इति हुत्वा सदक्षिणां ब्राह्मणेभ्यो दत्वा उपवीतं नवं सूत्रं त्रिगुणं च पवित्रकं सर्व स
कर्मसिद्ध्यर्थं उपवीतमहं दधे इति मंत्रेण उपवीतं धारयित्वा पूर्ववद्ब्रह्मयज्ञं कृत्वा येनबद्धो बली राजा दानवेंद्रो महाबलः तेनत्वामपि ब
धामि रक्षमाचलमाचल· इति मंत्रेण रक्षां बध्वा गुरवे गां हिरण्यं दत्वा ब्राह्मणान् पूज्य दक्षिणायां तोषयित्वा स्वयं भुंजीतेति इति रक्षाब
—धनोपवीत धारणकर्म प्रयोगः अथ समावर्तन प्रयोगः कर्ता देशकालौ स्मृत्वा गुरु समीपमागत्य गार्हस्थ्याद्याश्रमांतर प्राप्तिद्वारा
श्रीपरमेश्वरप्रीत्यर्थं समावर्तनाख्यं कर्म करिष्ये इति संकल्प्य गणेशपूजनं स्वस्तिवाचनं मातृका पूजनं नांदीश्राद्धादि कृत्वा .शिष्येण गवा
दिदक्षिणा दानेन तोषितोहं समावर्तनं करिष्ये इति प्रार्थ्य कुर्विन्त्युत्तरं दत्वा .समावर्तनकर्मणि स्थंडिलादि करिष्ये· इति संकल्प्य पात्रा
सादन काले चौलवत् पात्राण्यासाद्य मणिं कर्णभूषणं वासोयुग्मं छत्रमुपानहौ वेणुदंडं स्रजं करंजबीजफलपिष्टं कृत मुद्वर्तनं तदभावे स
र्षपपिष्टसुगंधिकृत चंदनमनुलेपनं अंजनं उष्णीषं च स्थापयेत् ततः पवित्रकरणाद्याघारांतं कृत्वा चौलवदष्टावाज्याहुतीर्जुहुयात्

गा·का· ततः स्मश्रुचौलवत् कुर्यात् दर्भनिधानादिचौलवद्वपनांतंकृत्वा उतद्वर्तनेनोद्वर्तनांगः स्नायात्. ततो अहतंवासो धृत्वावासः प्रावृत्य अ प·प्र·
२५ नुलेपनेन हस्तावनुलिप्य मुखमनुलिंपेत् ततः क्षीरोदंमथनेपूर्वंउल्धृतंकुंडलद्वयं श्रियांसहसमुद्धृतंदधेश्रीरचलास्तुमे इति कुंडलधा २
रणमंत्रः कुंडलेपरिधायसव्यदक्षिणंनेत्रे अंजनेनांक्तो पुष्पस्रजंशिरसि बध्वाप्रदक्षिणेनोष्णीषंसंबध्वा छत्रंवैणवंदंडंचहस्ते धृत्वा मणिं
कंठे बध्वा उपानहौपरिधायंतिष्ठ न् अग्नये स्वाहेतिसमिद्वयंहुत्वाविश्वेभ्योदेवेभ्य स्वाहेति दशसंमिधोजुहुयात्. ततः स्विष्टकृतादि
होमशेषंसमाप्य यथाशक्तिभूयसींदत्वा यत्रमधुपर्कपूजाभवतितत्रगच्छेत् समावर्तनानंतरंत्रिरात्रमाशौचंकुर्यात् इतिगागाभ
ट्टकृते बाळाजीप्रभुवर्यकारिते कायस्थदीपे समावर्तनप्रयोगः ७ ततः विवाहमौंजीबंधनादि कर्मनिर्विघ्नतासिध्यर्थं स
र्वारिष्टशांत्यर्थंसर्वाभीष्टप्राप्त्यर्थं इदंहिरण्यंतुभ्यमहंसंप्रददे इतिसंकल्प्य पुरोहितहस्ते द्रव्यंदद्यात् अधिकाराभावात्स्वयंक
रोतिचेत्पतितोभवेत् अथविवाहप्रयोगः तत्रादौ प्राक्निश्चयः विवाहमुहूर्ते कन्यापितृगृहे वरपितातत्संबंधिनश्च गत्वा·
कन्यापूजनंकुर्युः तद्यथा कन्यापितावरपिताच देशकालौसंकीर्त्य करिष्यमाणविवाहांगत्वेन वाग्दानंकरिष्ये इति कन्यापिता·
करिष्यमाणपुत्रविवाहांगत्वेन कन्यापूजनंकरिष्ये इतिवरपिता संकल्पयेत् ततोनिर्विघ्नतासिध्यर्थंगणपतिपूजनंवरुणपूजनं २५
करिष्ये इतिसंकल्प्य गणेशंपूज्य ततः वरुणंसंपूज्य पटाछिन्नपीठोपरिकन्यामुपविश्य गौर्यैनम इति कन्यांगंधादिभिः संपूज्य वस्त्रं

सौभाग्यसौभाग्यं सर्वालंकारतोधिकं सौभाग्याय ददे तुभ्यं तेन त्वं सुभगा भव इति वस्त्रं दद्यात् ततो नानाविधानि रत्नानि रम्याण्याभरणानि च सौभाग्याय ददे तुभ्यं तेन त्वं सुभगा भवेति अलंकारान् दत्वा नानाऋतुभवानीह पुण्यानि च फलानि च सफलान्वै ददे तुभ्य मेभिस्त्वं सुभगा भवेति पूगीफलतांबूलनारीकेलादिभिः पूजयेत् ततः कन्यापिता पंच पूगीफलानि गृहीत्वा अमुकप्रपौत्राय अमुकपौत्राय अमुकपुत्राय अमुकनाम्ने वराय अमुकप्रपौत्रीं आमुकपौत्रीं आमुकपुत्रीं आमुकनाम्नीं कन्यां ज्योतिर्विदादिष्टे मुहूर्ते दास्ये इत्युक्त्वा पूगीफलानि वरपितृहस्ते बध्वा गंधाक्षतैः पूजयेत् ततः अव्यंगे पतिते क्लीबे दशदोषविवर्जिते इमां कन्यां प्रदास्यामि देवाग्निगुरुसन्निधाविति पठेत् कौमुद्यां तु पित्रा सास्य त्वयसंशयमिन्नि वंदेदित्युक्तं स्वाबेस्वांतामरोगीणीमिति कचित्पाठः ततः कन्यापिता वाचा दत्ता मया कन्या पुत्रार्थं स्वीकृता त्वया कन्यावलोकनविधौ निश्चितस्त्वं सुखी भवेति वरपिता वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया पुत्रावलोकनविधौ निश्चितस्त्वं सुखी भवेति ततः उभौ विप्रान् गंधादिभिः संपूज्य परस्परं गंधादिभिः पूजनं कुर्यात् इति वाग्दानं ततो ज्योतिर्विदोक्ते शुभे मुहूर्ते आचारात् प्रथमं मंडपस्तंभस्थापनं ततो धूलिंनटनं वासस्तैलारोपणं हरिद्राबंधनादि कार्यं ततः कन्यापंचभिः सप्तभिर्वा करैर्मितां सप्तपंचान्यंतर सोपानां हरिहरमते चतुर्हस्तां वेदीं कुर्यात् ततः कन्यावरयोः पिता पूर्वदिने वा कृताभ्यंगः ग्रहमखविनायकशांत्यादि कृत्वा देशकालौ स्मृत्वा कन्यायाः पुत्रस्य विवाह

करिष्ये इति संकल्प्य गणपतिपूजनं स्वस्तिवाचनं मातृकापूजनं नांदीश्राद्धं कुर्यात् ततः सूत्रवेष्टितसमित्कुशगर्भाम्रपात्रेषु नंदिनी
मैत्रांउमाचपशुवर्धिनीरावारद्य मृन्मयकलशद्वयचूर्णलेपिते पक्वान्नं हिरण्यपूरिते नारीकेलफलविहिते अविघ्नगणपतिं आवा
ह्य षोडशोपचारैः संपूज्य स्थापयेत् ततः उपरि वितानं द्वारे च तोरणानि बध्नीयात् ततः कन्यापिता वरस्य सीमांतपूजं कृत्वा
गृहांगणे वरं समानीय मंगलासने उपवेशयेत् स्वयमुदङ्मुख उपविश्य देशकालौ स्मृत्वा करिष्यमाण कन्याविवाहांगत्वेन गृहाग
तं वरं मधुपर्केणाहं करिष्येति संकल्प्य विष्टरेति त्रिरुक्त्वा वराय विष्टरं पंचविंशतिकुशामयं दद्यात् ततो वरः प्रतिगृह्णामीति
तत्प्रतिगृह्य विष्टरोसि ऋषीणां तुल्यमानं वरुणस्य च रुद्रस्य ब्रह्मणो विष्णोः रपितिष्ठामि सर्वदेत्युत्तराग्रे विष्टरे उपविशेत् ततः
पाद्यं प्रतिगृह्यतां प्रतिगृह्णामीति वरः ततः कन्यापिता वरपादौ प्रक्षाल्य पत्नी चोदकं दद्यात् पृथिव्यां यानि तीर्थानि तानि ती
र्थानि सागरे तु सागरे सर्वतीर्थानि पदे पूज्यस्य दक्षिणे इति मंत्रेण ततो गंधदूर्वाक्षताफलयुतमर्घ्यं ३ ततो प्रतिगृह्यतामि
ति दद्यात् ततो वरः मित्रायनमे इति मधुपर्कमीक्ष्य प्रतिगृह्णामीति स्वांजलौ गृहीत्वा तत्पात्रे वामहस्ते कृत्वा दक्षिणांगुष्ठकं
निष्ठिकाभ्यां मधुपर्कमालोड्य वसुभ्यो नम इति पूर्वे रुद्रेभ्यो नम इति दक्षिणे आदित्येभ्यो नम इति पश्चिमे विश्वेभ्यो देवेभ्यो
नम इत्युत्तरे भूतेभ्यो नम इति ऊर्ध्वं मधुपर्कं क्षिप्त्वा गोकर्णाकृति हस्तेन त्रिः प्राश्नीयात् ततः अमृतायनम इत्याचम्य यशसे-

श्रियेनमइतिपुनराचम्य लौकिकोदकेनाचमेत् ततोदाता गौर्गौर्गौः प्रतिगृह्यतामितिदद्यात् ततोवरः प्रतिगृह्णामीतिप्रति
गृह्य रुद्राणांमातावसूनांदुहिता आदित्यानांस्वसा अमृतस्यनाभ्यैगवेनमः उदकंपिबतुतृणंभक्षयत्वित्युक्त्वागामुत्सृजेत्
ततोदातावस्त्रालंकारगंधमाल्याद्यैर्वरमर्चयेत् ततः प्रत्यङ्मुखोवरः प्राङ्मुखा कृतगौरीपूजायाः कन्यायाः अंतः पटंधृत्वा सु-
लग्नेतमपसार्यसुखंनिरीक्षेत् सुलग्नंपाणिग्रहणंकेचिदिच्छंति मुखदर्शनोत्तरमग्निप्रतिष्ठापनं ततः कन्यादानमिति हरदत्तः
सुखनिरीक्षणात् पूर्वमग्निप्रतिष्ठापनमिति रुद्रधरः कन्याप्रतिग्रहोत्तरमितिनारायणवृत्तिः अथकन्यापिताउदङ्मुखः
स्वदक्षिणेपत्नीमुपवेश्यकुशपाणिराचम्यदेशकालौसंकीर्त्य ममसमस्तपितॄणांनिरतिशयसानंदब्रह्मलोकावाप्त्यादिकन्या
दानकल्पोक्तफलावाप्तये नेनवरेणास्यांकन्यायामुत्पादयिष्यमाणसंतत्या ब्राह्मपक्षे द्वादशावरान् प्राजापत्येष्टावरान्षट्परान्
पुरुषान्पवित्रीकर्तुमात्मनश्चलक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना प्रजापत्येप्राजापत्यविधिना वालंकृतकन्यादानमहंक
रिष्ये इत्युक्त्वापठेत् कन्यांकनकसंपन्नांकनकाभरणैर्युतां दास्यामिविष्णवेतुभ्यंब्रह्मलोकंजिगीषया विश्वंभरः सर्वभूताःसा
क्षिण्यः सर्वदेवताः इमांकन्यांप्रदास्यामिपितॄणांतारणायवेति ततः कांस्यपात्रेवरहस्तोपरिवधूहस्तौन्यस्यवरहस्तेस्वमो-
क्षिंतमस्तु शिवा आपः संतुसौमनस्यमस्तुइत्युक्त्वा कन्यातारयतुपुण्यंवर्धतां शांतिः पुष्टिस्तुष्टिश्चास्तु तिथिकरणमुहूर्त्तनक्षत्र

संपदस्तु पुण्याहं भवंतो ब्रुवंतु ॐ पुण्याहमिति विप्राः स्वस्ति भवंतः श्रीरस्त्विति भवंतः ततो अमुकप्रवरान्वितामुकगोत्रोत्पन्नामु
कनामाहं मम समस्त पितॄणामित्यादि लक्ष्मीनारायण प्रीतय इत्यंतं प्राग्वदुक्त्वा मुकगोत्रस्य मुकनाम्नः प्रपौत्रायामुकनाम्नः पौत्रा
य मुकनाम्नः पुत्राय अमुक नाम्ने वराय श्रीधररूपिणे कन्यार्थिने अमुकगोत्रां आमुकप्रपौत्रीं आमुकपौत्रीं अमुकपुत्रीं मम आमु
कनाम्नीं कन्यां प्रजापतिदैवत्यां यथा शक्त्यलंकृतां प्रजोत्पादनार्थं तुभ्यमहं संप्रददे । इति कुशयवयुतं जलं कन्या हस्ते वर हस्ते दद्यात्
सह धर्मं चरणार्थमिति प्राजापत्ये संकल्पः मयापि दत्तेति कन्यामातापि वदेदिति याज्ञिकाः ततो वरः प्रतिगृह्णामि स्वस्तीति वदे
त् ततः कन्यापिता एवं त्रिः संकल्पयेत् गौरीं कन्यामिमां प्रोत्वं यथा शक्ति विभूषितां गोत्राय वर्मणे तुभ्यं मया दत्तं समाश्रय क
न्ये ममायतो भूयाः कन्ये मे देवि पार्श्वयोः कन्ये मे पृष्ठतो भूयास्त्व द्दानान्मोक्षमाप्नुयात् मम वंश कुले जाता पालिता वत्सराष्टकं तु
भ्यमेवं मया दत्ता पुत्रपौत्र प्रवर्द्धिनीति पठेत् ततः कन्या दान प्रतिष्ठार्थं इदं सुवर्णं गोमिथुनं सदक्षिणं संप्रददे इति दद्यात् शक्तौ स
त्यां ताम्र कांस्यपात्र गवाश्व दासिदासादि दद्यात् कन्या बांधवाश्च पोतकं दद्युः होमांते यौवनक दानमिति केचित् ततः पात्रस्थ क
न्यादानोदकेन वधूवरयो रभिषेकं कुर्युः ततः श्चतुर्वारं पंचवारं वा वधूवरौ सूत्रेणावेष्ट्य उपरितनमधो मार्गेणाधस्तन वोपरिनि २७
ष्कास्य त्रिगुणं पीतं च कृत्वा हरिद्रा पूर्णा स्तु कांचनं बध्वा धस्तनं नर हस्ते उपरितनं वधू हस्ते कंकणं बध्नीयात् येन बद्धो बली राजा दा

नवेंद्रो महाबलः तेनत्वामपि बध्नामि रक्षे माचल माचलेति ततोदुग्धार्द्राक्षतारोपणं वधुवरौ कुर्यातां तत्रादौ बध्ना ततोवरेण त
त्रमंत्राः भगायनमः यज्ञायनमः श्रियेन० धर्मायन० प्रजापतये० यशसेनमः इतिततः प्राङ्मुखोउपविश्य वस्त्रद्वयंकन्यायैदया
त् साचपरिदध्यात् ततोमांगल्यंतंतुनानेनममजीवनहेतुनाकंठेबध्नामिसुभगेत्वंजीवशरदांशतमिति सौभाग्यतंतुवधुगलेबध्नीयात्
अत्रकंकणबंधनंइतिकेचित् भूषणैश्चवधूंभूषयेत् ततोहरिद्राखंडयुतानिपंचपंचपूगानिआचाराल्लड्डूकयुतानिपात्रेनिधाय तत्रउ
भाभ्यांवधूवराभ्यांगणपतिरावाहनादिदक्षिणांतैःषोडशोपचारैः पूजाकार्या ततःपुरोहितःतत्रनानिहरिद्राखंडलड्डुकपूगीफ-
लानिवधूवरयोःप्रावरणवस्त्रपल्लवेगणपतिंस्मरन्बध्नीयात् ततोवधूतंडुलपुंजेषुमहालक्ष्मीपार्वतीशचींपूजयेत्॰ तद्यथा मम
सौभाग्यप्राप्त्यर्थमिंद्राणयादिपूजनंकरिष्येतिसंकल्प्य पूजनंकृत्वाप्रार्थयेत् देवींद्राणिनमस्तुभ्यंदेवेंद्रप्रियभामिनि विवाहभा
ग्यमारोग्यंपुत्रलाभंचदेहिमे प्रार्थयेत् ततोवरोवधूंगृहीत्वापूर्वकृतवेद्यांप्राङ्मुखउपविशेत् तत्रअन्यासुवासिनीऐशान्यांमं
गलकुंभमलंकृतमभिपूर्णंउत्तरतोदृषदुपलेपनकृतेस्थापयेत् ततोवरोविवाहहोमंकुर्यात् तद्यथा देशकालौस्मृत्वा अस्यांपर
णीतायांभार्यात्वसिध्यर्थंविवाहहोमंकरिष्ये तदंगस्थंडिलोल्लेपनाद्यग्निप्रतिष्ठापनांतंपूर्ववत्कृत्वा अग्न्याधानंअन्वाधानंकु-
र्यात् अस्मिन्विवाहेकर्मणिदेवतापरिग्रहार्थमन्वाधानंकरिष्ये इतिसंकल्प्य अस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंत

मुक्का अन्नप्रधानं त्रिरग्निं पवमानं अग्निं प्रजापतिं चाज्येन अर्यमाग्निं वरुणाग्निं पूषाग्निं प्रजापतिं च लाजद्रव्येण शेषेण स्विष्टकृ-
तमित्यादि सद्यो यक्ष्ये इत्यंतमुक्त्वा प्रजापतये स्वाहेति समिद्धूयं हुत्वा इध्माबर्हिः संभृत्य परिसमूह्य परिस्तीर्य पर्युक्ष्य प्रोक्ष-
णीं स्रुवं प्रणीतां आज्यपात्रं इध्माबर्हिषी चासाद्य पवित्रकरणाद्याज्यभागांतं कुर्यात् ततः इदमुपकल्पित द्रव्येण तस्यै तस्यै देवतायै-
न मम इति आचार्यात्ततः अग्नये पवमानाय स्वाहेति त्रिः अग्नये प्रजापतये च हुत्वा प्रत्यङ्मुख स्तिष्ठन् बंधवः सांगुष्ठ पाणिं गृण्हा-
ति भगोर्यमा त्र सविता देवा मत्यं पुरादद्दुः तव हस्तं स्वहस्तेन गृण्हामि सुभगा भवेति मंत्रेण ततः स्वस्थानोपविश्य बंधवजलि सुप
स्तीर्य तत्र कन्या भ्राता न्योवा द्विर्लाजान्वपति ततो हविरवत्तं च प्रत्यभिघार्य अर्यमाग्नये स्वाहेति जुहुयात् ततो बंधुना सह अग्नि-
मुदकुंभं च प्रदक्षिणां कुर्यात् तत्र मंत्राः अराद्रवक्षरपतिघ्निः शिवा च सुमनास्त्वया सुवर्चाः पुत्रसूर्देवकामा च सुखदा भवेति
ततो गृहीता मेव वधूं उत्तरतोग्नेर्दक्षिणेन यदा श्मानमारोहयति त्रिसौम्यगुणैर्युक्ता वीरसूत्वं वसुभव अश्मानमिममारोह भवास्ये
व मपि स्थिरेति मंत्रेण एवं त्रि र्हो मादि अश्मारोहणांतं कृत्वा चतुर्थीमाहुतिं शूर्पेण तूष्णीं मभाग्नि प्रजापतये नम इति हुत्वा ततः उदकसंस्था-
न्समनंडुउपुंजां कृत्वा वधूः दक्षिणेन पदा वरः सप्तपदानि क्रामति इषयेनमः प्रथमं ऊर्जे नमः द्वितीयं रायस्पोषायेति तृतीयं मायोभव्याय
ति चतुर्थं प्रजाभ्य इति पंचमं ऋतुभ्य इति षष्ठं सखिभ्य इति सप्तमं ततः सप्तमे पदे पुरोहितो द्वयोः शिरसि सन्निधाय पूर्वकुंभोदकेन आ-

मपल्लवैरभिषिंचेत् ततः सूर्यमुदीक्षस्वेत्युक्त्वा वधूः सूर्यायनम इति सूर्यं पश्येत् दिने विवाहे रात्रौ ध्रुवमुदीक्षस्वेत्युक्त्वा वधूः ध्रुवा
यनमः ध्रुवं पश्येत् ततोस्विष्टकृतादि होमशेषं समाप्य गां स्वर्णं च दक्षिणां संकल्प्य भुंजीयात् ततो ऽब्दं द्वादशरात्रं वा अक्षारलवणा
शिनौ ब्रह्मचारिणा वलंकुर्वाणा वधः शायिनौ दंपती स्यातां तैलाक्षतचंदनादि यथाचारं कुर्यात् ततः चतुर्थदिने कन्यापिता देशकालौ
स्मृत्वा कृतस्य कन्याविवाहस्योत्तरांगत्वेन वरस्य वरपक्षीयाणां यथाविभवं वस्त्रैः पूजनं करिष्ये वरमात्रे वंशपात्रदानं करिष्ये तदंग
णेशपूजनं स्वस्तिवाचनं च करिष्ये इति संकल्प्य वरं वरपित्रादींश्च वस्त्रैः संपूज्य षोडशलघुशूर्पं वंशपात्रप्रतिमायां फलतंडुलपुंजे वाउ
मामहेश्वराभ्यां नम इत्युमामहेश्वरौ संपूज्य प्रार्थयेत् गौरणीत्वमुमादेवी महेशो गिरिजापतिः अतस्त्वां पूजयिष्यामि गौरणी सर्वकाम
दां सवस्त्रां च सदीपां च शूर्पैः षोडशभिर्युतां वरमात्रे प्रदास्यामि कन्यादानस्य सिद्धये इत्युक्त्वा कृतस्य कन्यादानस्य संपूर्णफलप्राप्त्यर्थं
इदं वंशपात्रं वरमात्रे संप्रददे न मम इति पठेत् वंशो वंशकरः श्रेष्ठो वंशो वंशविवर्धनः अनेन वंशदानेन तुष्टो ऽस्त्विंकरो तु मे. वंशपात्रमि
दं पुण्यं वंशजातसमुद्भवं दानानामुत्तमं दानमतः शांतिं प्रयच्छ मे इदं ते चित्र कुर्वंति ततः कन्यापिता यदि अष्टवर्षा भवेत्कन्या पुत्रवत्पा
लिता मया इदानीं तु मया तुभ्यं दत्ता स्नेहेन पालिता इति वरांके वधूमुपवेशयेत् ततो वरो यानेन वध्वा सह स्वगृहं गत्वा तत्रश्रियं संपूज्य स्था
पितानां मातृणां मंडपदेवतानां च पूजां कृत्वा विसृज्य वस्त्रयंपि कंकण मोक्षौ कृत्वाग्निं प्रानं पूजयेत् इति गागाभट्टकृते बाळंजीभ

भुवर्यकारिते कायस्थधर्मदीपे विवाहप्रयोगः ॥ अथसंस्कारत्वादंत्येष्टि प्रयोगः ॥ अंत्येष्टिस्त्रिविधामाधवीये ॥ पूर्वोक्ति
यामध्यमा तथाचैवोत्तराः क्रिया: त्रिप्रकाराः क्रियात्वेतास्तासां भेदंशृणुष्वमे आदाहाद्द्वादशाहाच्चमध्येयाः स्युः क्रियान्नृप
ताः शक्तामध्यमामासि मास्येकोद्दिष्टसंज्ञिताः प्रेतेपितृत्वमापन्ने सपिंडीकरणादनु क्रियंतेयाः क्रियाः पुत्रप्रोच्यंतेतानृपो-
त्तराः पितृमातृसपिंडैश्चसमाससक्तिगतैस्तथा तत्संघातृगतैश्चैवराज्ञावाधनहारिणा पूर्वामध्याश्चकर्तव्याः पुत्राद्यैरेवचो
त्तराः आद्याद्दिमारभ्यावयवपिंडदानकालवल्यंतक्रियाः पूर्वाः महिकोद्दिष्टमास्योनाब्दिकसपिंडीकरणांताः मध्यमाः आ
ब्दिकश्राद्धमारभ्यषण्णवतिश्राद्धरूपाउत्तराः तत्रपूर्वमध्ययोर्धनग्राहिणांसपिंडानांसोदकानांचाधिकारः उत्तरासुपुत्रादी
नामेवतेनभागिनं यादेर्धनग्राहिणोपि और्ध्वदेहिकपुत्रत्वेसपिंडीकरणांतमावश्यकंनाब्दिकादि एवंपितृव्यमातुलादितर्पणम
पिनावश्यंतेषामप्युत्तरक्रियांत्वात् पुत्रपौत्रप्रपौत्राभावऔर्ध्वदेहिकाधिकारिणः तत्कर्तव्यंचसंक्षेपतउक्तंकल्पांतरेब्राह्मेनकदा
चित्स्वगोत्रायश्राद्धंकार्यमगोत्रजैः नसमाप्तव्रतस्यापिकर्तव्यंब्रह्मचारिणः श्राद्धादिमातापितृभिः नतुतेषांकरोतुसः नित्यंगुरुकु
लस्थस्यगुरुः संब्रह्मचारिणः निरन्वयेसपिंडेतुमृतेसतियदान्वितः तदशौचंपुराचीर्त्वाकुर्यात्तत्पितृवत्क्रियां यतः किंचिन्नकर्त २९
व्यंनचान्येषांकरोतिसः गुरुः करोतिशिष्याणांपिंडनिर्वापणंसदा कृत्वातात्पितृकाशौचंस्वजातिविहितंचयत् भ्रातुर्भ्रातास्वयं

चक्रेतद्भार्याचेन्नविद्यते तस्यभ्रातृसुतश्चक्रेयस्यनास्तिसहोदरः दत्तानांचाप्यदत्तानांकन्यानांकुरुतेपिता चतुर्थेहनितास्तेषां
कुर्वीरन्कुलसमाहिताः मातामहानांदौहित्राः कुर्वंत्यहनिचापरे तेपितेषांप्रकुर्वंतिद्वितीयेहनिसर्वदा जामातुःश्वशुरश्चक्रेते
षांतेपिचसंयताः मित्राणांदशपत्न्यानांश्रोत्रियाणांगुरुस्तथा भागिनेयसुतानांचसर्वेषांचपरेरुचिः श्राद्धंतुकार्यंप्रथमंस्नात्वा
कृत्वाजलक्रियाः मृतेराज्ञिसपिंडेतुनिरपत्येपुरोहितः मंत्रीवातदशौचंतुकृत्वापश्चात्करोतिसः ब्राह्मणस्त्वन्यवर्णानांनकरो
तिकदाचन. कामाल्लोभाद्भयाद्वापिकृत्वातज्जातितांव्रजेत् पुत्राः कुर्वंतिविप्रस्यक्षत्रविट्शूद्रयोनयः सताहशेभ्यः पुत्रेभ्योन
करोतिकदाचन स्वमातुलाकुरुतेतेषांवेपितस्याश्चकुर्वतां इतिचतुर्थइति कन्याचेत्कर्तातदाचतुर्थेहनिसर्वान्यवपिंडान्
समर्पयेदित्यर्थः एवमग्रेपिज्ञेयः दाक्षिणात्यास्तु कन्यादिद्वारापिदशाहपर्यंतमेवयवपिंडान्कारयंति नत्वविवाहश्मशानयो
र्ग्रामंप्रविशतादितिस्मृतिसंचारेमूलं कन्यादीनामग्निकर्मानधिकारः स्वाशौचाद्यधिरेव तत्रापिपुत्रेषुविद्यमानेषुनान्येनवाचये
त्स्वधामितिवचनात् त्रिविधक्रियायांपुत्रस्यैवाधिकारः सचऔरसोदत्तकोवा दत्तौरसेतरेषांतुपुत्रत्वेनपरिग्रह इतिकलौ पुत्रां
तरपरिसंख्यानाम् एवंचऔरसपुत्रसत्वेपिदत्तकस्यैवाधिकारइतिकेचित् अन्येतु पुत्रपदंपुत्रप्रपौत्रयोः उपलक्षणं तेपुत्रप्र
पौत्रेषुसत्सुदत्तकस्यनाधिकारइत्याहुः पुत्रस्यच अनुपनीतस्याप्यधिकारः अनुपनेतापिकुर्वीतमंत्रवत्पैतृमेधिकां यद्यसौकु

गा·का· तच्चूडस्याथदिवस्यात्रिवत्सर इत्युक्तेः तत्रचमंत्रोच्चारणं गुरुद्वारा नाभिव्याहारयेद्ब्रह्मस्वधानिनयनादत इत्युक्ते सर्वाभावे प·प्र·
३० धर्मपुत्रोवाकार्यः अपुत्रेणस्रुतः कार्योयादृकृतादृक्प्रयत्नतः पिंडदानक्रियाहेतोर्धर्मसंस्थापनायचेतिव्यासोक्तेः अत्रमरणस २
मयेदानान्युक्तानि आसन्नमृत्युनादेयागोः सवत्सांतुपूर्ववत् नदायदिनशक्नोति दातुंवैतरणींतुगाम् शक्तान्योरुक्तदानत्वात्
दद्याच्छ्रेयोमृतस्यतु उत्क्रांत्यादीनिदानानिदशदद्यान्मृतस्यतु गोभूतिलहिरण्याज्यवासोधान्यंगुडानितु रौप्यंलवणमित्याहु
र्दशदानान्यनुक्रमात् गारुडे तुलसीसन्निधौकृत्वाशालग्रामशिलांतथा तिललोहंहिरण्यंचकार्पासंलवणंतथा सप्तधान्यशि
तिर्गावएकैकंपावनंस्मृतं तिलपात्रंयथाशक्तिशय्यादानंचकारयेत् अथप्रायश्चित्तप्रयोगः पुत्रादिरासन्नमृत्युंपित्रादिंज्ञात्वा
षडब्दंत्र्यब्दंसार्धाब्दंवाप्रायश्चित्तंकारयेत् यथासप्तपंचत्रीनेकंवाविप्रंपर्षदमुपवेश्यार्द्रवासास्वर्णरौप्ययोर्निष्कंतदर्धंवागोस्त-
च्चतुर्गणंवा वृषस्येत्येवंवृषगोष्टषण्मूल्यंनिधायसाष्टांगंप्रणम्यतैः किंतेकार्यमितिपृष्टोममजन्मप्रभृत्यद्ययावत् ज्ञाताज्ञात-
कामाकामसकृदासकृत्कायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकसं
करीकरणमलिनीकरणअपात्रीकरणजातिभ्रंशकरणप्रकीर्णपातकानांमध्येसंभावितानांनिरासार्थमनुग्रहंकृत्वाप्रायश्चित्तमुप- ३०
दिशंतुभवंतः इत्युक्त्वासर्वधर्मविविक्तारोगोप्तारःसकलाद्विजाः ममदेहस्यसंशुद्धिंकुर्वंतुद्विजसत्तमाः मयाकृतंमहाघोरंज्ञा

तमज्ञातकिल्बिषं प्रसादः क्रियतां मय्यं शक्त्यानुज्ञां प्रयच्छथ पूज्यैः कृतपवित्रोहं भवेयं द्विजसत्तमैः इति पठेत् शृणुयाद्वा पुत्रादिस्त-
स्येत्यादि वदेत् ततः सभ्यास्तस्य तु शक्त्यनुसारेण प्रायश्चित्तमनुवादकाग्रे वदेयुः ततः आचाराभिबंधपुस्तकस्यानुवादकस्य च पूजां-
कृत्वा तस्मै दक्षिणां पापानुसारेण दद्यात् ततः सभ्याः अमुकेन प्रायश्चित्तेन पूर्वोत्तरांगयुतेन यथाशक्ति प्रत्याम्नाय द्वाराचीर्णेन त्वं शुद्ध-
स्थो भविष्यसीत्यनुवादकाग्रे निर्वदेयुः शोध्यस्त्वनुग्रह इत्युक्त्वा नद्यादौ गत्वाचम्य देशकालौ स्मृत्वा मम जन्मप्रभृति इत्यादि निरासार्थ-
मित्यंतमुक्त्वा सभ्योपदिष्टममुकप्रायश्चित्तं पूर्वोत्तरांगयुतममुकप्रत्याम्नायद्वारा यथाकालं करिष्ये इति संकल्प्य यानि कानि च पापानि ब्र-
ह्महत्यासमानि च केशानाश्रित्य तिष्ठंति तस्मात्केशान् वपाम्यहं इति कक्षोपस्थवर्ज्यं केशश्मश्रून् नखानि वापयित्वा आयुर्बलमिति-
दंतधावनं कृत्वा तूष्णीं स्नात्वाचम्य मृदमादाय अष्टदिक्षु निक्षिप्य शेषां सर्वांगे संलिप्य कुशोदकेन स्नात्वाचम्य गोमयदधिदुग्धघृ-
त कुशोदकैः स्नात्वा आचम्य वासः परिधानं तिलकं च कृत्वा गवामंगेषु तिष्ठंति भुवनानि चतुर्दश यस्मात्तस्माच्छिवं मे स्यादिहलोके पर-
त्र चेति गोदानं कृत्वा महाविष्णुप्रीत्यर्थं चतुरादि युग्मान्यामान्नानि दत्वा आज्यहोमं कुर्यात् स्थंडिलादि अग्निप्रतिष्ठांते न्वाधानं
तं समिद्द्वयहोमांते इध्माबर्हिषी सन्नह्य परिसमूह्य परिस्तीर्य परिषिच्य प्रोक्षणी स्रुवं प्रणीता आज्यपात्राणि स्थाप्य पवित्राणि आ
ज्यसंस्कारांते स्रुवं संमृज्याग्निं विमृज्य प्रधानहोमं अग्नये वायवे सूर्याय प्रजापतये नम इति सप्तविंशतिं कृत्वा समं कृत्वा षा-

जुहुयात् विष्णवे ब्रह्मणे चंद्राय, इंद्राग्निभ्यां अग्नये वायवे सूर्याय प्रजापतये अग्नये स्विष्टकृते नमइति दशाहुतीर्हु
त्वा घृतग्रहणं करिष्ये इति ब्राह्मणान्पृष्ट्वा तूष्णींपिबेत् विप्रद्वारा होमं केचित् स्त्रीशूद्राणांनहोमः ततः प्रत्याम्नायैः प्रायःश्चि
त्तंसमाप्यीक्त, होमो विष्णुःश्राद्धमतः गोदानंच कृत्वापूर्वोक्तदश दानानि कुर्यात् गोमंत्रउक्तः सर्वसस्याश्रया भूमिर्वराहेन समु
द्धृता अनंतसस्यफलदात्यतःशांतिंप्रयच्छमे महर्षेर्गोत्रसंभूता तिलानां हिरण्यगर्भमितिहिरण्यस्य कामधेनोःसमुद्धृतंस
र्वक्रतुषुसंस्थितं देवानामाज्यमाहारोत्यतःशांतिं॰ शरण्यंसर्वलोकानांवाससः सर्वदेवमयं धान्यं सर्वप्रीतिकरं महत् प्राणिनां
जीवनोपायमतः॰ तथारसानांप्रवरःसदैवेक्षुरसोमतः ममतस्माच्छुभांलक्ष्मींददस्व गुडसर्वदा गुडस्य प्रीतिर्यतः पितॄणां
तुविष्णुशंकरयोःसदा शिवनेत्रोद्भवंनित्यमतः॰ रौप्यस्य यस्मादन्नरसाःसर्वेनोत्कृष्टालवणंविना शंभोःप्रीतिकरन्नित्य॰
मतः॰ लवणस्य॰ ततोवैतरणींदद्यात् ममयमद्वारस्थनदीसुखोत्तारण द्वारा सुखप्राप्त्यर्थं वैतरणीदानंकरिष्ये गोविप्रं
चसंपूज्य गोपुच्छंगृहीत्वा पूर्ववत्कुलमुच्चार्यमांधेनुंहेमशृंगाम्रौप्यखुराम् कांस्यदोहनांकृष्णावस्त्रांघंटाद्यलंकाराम् तुभ्यमिमां
संप्रददेनममेत्युक्त्वा यमद्वारेमहाघोरे घोरावैतरणीनदी तर्तुकामोददाम्येतां तुभ्यंवैतरणींनदीं इतिपठेत् ततःप्रतिगृहीता
यां धेनुकेत्वंप्रतीक्षस्व यमद्वारेमहाभये वितितीर्षुरहंदेवी वैतरण्यैनमोनमः इतिपठित्वाविसर्जयेत् मोक्षंदेहिहृषीकेशमो

क्षं देहि जनार्दन मोक्षधेनुप्रदानेन मुकुंदप्रियतां नयेति मोक्षधेनुं रोहिकामुष्मिकं यच्च सप्तजन्मार्जितं ऋणं तत्सर्वं सिद्धिमा
यातु गामेतां ददतो ममेति ऋणधेनुं अन्यजन्मार्जितं पापं मनोवाक्कायकर्मभिः तत्सर्वं नाशमायातु गोप्रदानेन केशव पापधेनुं द-
द्यात् अथ दुर्मरणे प्रायश्चित्तं तत्र चांडालादिहते नरि क्षमृत कृच्छ्रातिकृच्छ्रचांद्रायणतारणानि रजस्वलासूतिकांत्यस्पर्शे म्लेच्छ
हते च कृच्छ्राब्दः उर्ध्वोच्छिष्टो अधरोच्छिष्टो भयोच्छिष्टः श्वचांडालश्वपाक्यादस्पर्शे रवद्वा मरणे शवे कृमिकीटोद्भवे त्रीन् षट् पंच दश कृच्छ्रा
न् चांद्रत्रयं वा अंत्यजस्पर्शे कृच्छ्राब्दमेव प्रपाते विषे वा नव कृच्छ्राः शृंगीविप्रचोराद्यैरात्मघाते शवे पर्युषिते कृच्छ्रत्रयं अशोच्य
मरणेप्येवं छंदोगपरिशिष्टे दुर्बलं स्नापयित्वा शूद्रचैलाभिसंवृतं दक्षिणाशिरसा भूमौ बर्हिष्मत्यां निधापयेत् घृतेनाभ्यक्तनात्या
व्य शुद्धवस्त्रोपवीतिनं चंदनोक्षितसर्वांगे सुमनोभिर्विभूषितम् हिरण्यसकलान्यस्य न्क्षिप्त्वानीयेषु सप्तसु मुखेष्वपि पिधा
येनं निर्हरेयुः सुतादयः सप्तच्छिद्राणि तत्रैव कर्णे नेत्रे मुखे घ्राणे हिरण्यशकलं न्यसेदित्यन्यत्रोक्तं आम्रपात्रं समादाय प्रेतमभि
पुरःसरं एकाग्नं गच्छेत्तस्यार्धमर्धमंत्यकृत्स्त्यजेद्बहिः ऊर्ध्वमादहनं कार्यमासीनो दक्षिणामुखः सव्यं जान्वाच्य शनकैः सतिलैः पिंडदा
नवत्. अथ पुत्रादिराप्लुत्य कुर्याद्दारुचयं महत् ततोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे उत्तानत्वं द्विजानां तु अन्येषां तु अधोमुखत्वं
अधोमुखो दक्षिणदिक्चरणस्तु पुमान् उत्तानदेहा नारी तु सपिंडैरपि बंधुभिरित्यादि पुरा ऊर्ध्वदैहिकं शिरोमणौ निरग्निकस्तु चितोपरि-

प्रेतमुत्तरशिरस्कं अधोमुखं दक्षिणशिरस्कं उत्तानं वा स्थापयेत् आंवसथ्याग्निनां तु दक्षिणशिरसमुत्तानं आहिताग्निस्तु प्राक्शि 
रसमुत्तानमितिव्यवस्था एवमेव पितृमेधपद्धतौ अत्र दाहे अमंत्रत्वं निषेकादीनीतिया पुत्रिकेतिवाराहात् अथप्रयोगः
पुत्रादिः अत्यासन्नपितुः मृतौ कृष्णादिनामजपं कृत्वाकारयित्वावा मृतंज्ञात्वा सपिंडाः वृद्धाः मुक्तकेशाः शवंप्रच्छाद्य दाहदेशंनयेयुः
दाहदेशोग्रामादाग्नेय्यांदिशि ततः पुत्रादिः मृतस्यऊर्ध्वाधोच्छिष्टदेहिकाधिकारसिद्ध्यर्थं कृच्छ्रत्रयं संकल्प्य ततः कक्षोपस्थव
र्जं वपनं कृत्वा वाससः त्रिभिर्भागैः शिरः प्रभृति अंगुलिपर्यंतं पादतलवर्ज्यं प्रेतं प्राच्छाद्य चतुर्थभागं तस्य स्थित्वा तेनात्मन
उत्तरीयं कुर्यात् द्वादशाहांतप्रेतकृत्ये तदेव धार्यं ततः पुत्रादिः अपसव्येन देशकालौ स्मृत्वा अमुकगोत्रस्य मम पितुः अमुकप्रे
तस्य प्रेतत्वविमोक्षार्थं और्ध्वदेहिकं करिष्ये इति संकल्प्य प्रेतं प्रक्षाल्य वपनं कारयित्वा पुनः प्रक्षालयित्वा सुगंधिद्रव्येण अ-
नुलेपयेत् ततः शुचिदेशे पंचभूसंस्कृते क्रव्यादाग्निसंज्ञकमग्निं प्रज्वाल्य गंधमाल्यैः संपूज्य तस्य मुखसप्तच्छिद्रेषु हेमशक-
लान् तदभावे आज्यं वा क्षिप्त्वा नववस्त्रवेष्टितं घृताक्तं कृत्वा चितौ उत्तरशीर्षमधोमुखं पुरुषमुत्तानां स्त्रियं निपात्य असौ परलो-
काय स्वाहेति तूष्णीं वाज्याहुतिं दत्वा शिरस्थाने अग्निं दद्यात् मंत्रस्तु वाराहे कृत्वा तु दुष्कृतं कर्म जानता वाप्यजानता मृत्युकाल 
वशं प्राप्य नरं पंचत्वमागतं धर्माधर्मसमायुक्तं लोभमोहसमावृतं दहेयं सर्वगात्राणि दिव्यान् लोकान् स गच्छतु ज्वलमानं मह्

वन्हिं शिरस्थाने प्रदापयेत् .चतुर्वर्णेषु संस्थानमेवं भवति पुत्रिके चतुर्वर्णो क्रियानुपनीतद्विजपरा क्रियानिबंधे गारुडे त्वन्ये
मंत्रा ऊक्ताः त्वंभूतकृज्जगंद्योने त्वं लोकपरिपालक उक्तः संहारकस्तस्मादेनं स्वर्गमृतं नयेति ततः किंचिच्छवे दग्धे सजलं कुंभमा
दाय पादतो प्रदक्षिणं त्रिः परिक्रम्य . त्रिरश्मना कुंभं भित्वा कुंभं क्षिप्त्वा अवेक्ष्यमाणा बालपुरः सराजलं गत्वा पूर्वधृतं वस्त्रं प्रक्षाल्य
पुनः धृत्वा वामनामिकया जलमालोड्य वृद्धास्ताः स्नात्वा तीरे दर्भपाषाणं निधाय ऋजुदर्भतिलजलपूर्णांजलिं काश्यपगोत्रामुकप्रेत
शर्मणा एषं ते तिलांजलिरूपतिष्ठतु . उपतिष्ठतामिति निवा सर्वे दाक्षिणा मुखाः सकृत् स्त्री मातुलराज्ञां उदकदानं कृता कृतं . क्लीबभर्तृग-
र्भघ्नीपतिते रुदकं न कार्यं तेभ्योप्यन्ये नं देयं एवं त्रिंशत्पंचदशवादिनानि प्रत्यहं दद्यात् प्रत्यहमेकवृद्धिकवृद्धिर्वा कार्यो . ततो बालपुरः
सराजलादुत्तार्याधो दशावस्त्रं निष्पीड्य गृहद्वारि स्थित्वा त्रीणि निंबपत्राणि विदस्याचम्य गोमय सर्षपदूर्वां बुदूर्वाग्निमश्मस्पृश्या
श्मनि पदं निधाय गृहं प्रविशेयुः वृद्धाः शाकापनीदकंत्र कुर्युः ततो मृन्मयपात्रद्वये एकाहं त्र्यहं वा प्रेतायस्नाहीति जलं पिब दमिति
क्षीरं दद्यात् दशरात्रेति हेमाद्रौ प्रत्यहं भूमौ कर्ता भोजनसमयेन्नं संकल्पयेत् ततस्त्र्यहमुपवासः क्रितलब्धाशनो वा अधः शय्या
सर्वेषां यावदाशौचं प्रथमतृतीयसप्तमदशमेषु ज्ञातीनां सह भोजनं तच्च दिवैव न रात्रौ अस्थिसंचयनं तच्च प्रथमद्वितीयतृ
तीयचतुर्थसप्तमनवमेषु शूद्राणां विशेषतो दशमेन्हि तदुत्तरं तु भौमार्कमंदतिथिषु एकंपाद द्विपाद त्रिपादकर्तृनक्षत्रवर्ज्यं दि-

नेकार्यं कर्ता देशकालौस्मृत्वा अस्मत्पितुः अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्वनिवृत्या उत्तमलोकप्राप्त्यर्थं अस्थिसंचयश्रा
द्धंकरिष्ये इत्युक्त्वा इहलोकंपरित्यज्य गतोसिपरमांगतिं मनसावायुरूपेण प्रेतंत्वात्मनियोजयेत् अमुकप्रेतेदंते आसनमुपति
ष्ठतां एवमर्घ्यंगंधंपुष्पंधूपंदीपंआच्छादनंउपतिष्ठतां एवंक्रव्याद्देवताभ्यः प्रेतायतत्सखिभ्यश्चत्रीण्यामान्नानि दत्वा घृतक्षीरोद
केश्चितिंप्रोक्ष्य पलाशशाखयाचिते र्भस्मचोत्धांगुष्ठकनिष्ठिकाभ्यांशिरसउरसः पाण्योःपार्श्वयोः पादयोः अस्थिन्यादायपंचगव्येन
गंगोदकेन प्रक्षाल्य गंधाद्यर्चितानि क्षौमेणावेष्ट्य नवकुंभेनिधायशरावेणादिकंकृत्वा तत्रावकाशमीपच्छपलाकायुतंकुंभंनवंसं
स्थाप्य क्रव्याद्देवताभ्यः प्रेतायतत्सखिभ्यश्चनिवेद्य कुंभेषुपिंडान्दद्यात् नमःक्रव्यादमुख्येभ्यो देवेभ्य इह सर्वदा श्म-
शानवासिनोदेवाः शवानांपरिकीर्तिताः तेभ्योनमुदकंकुंभमक्षय्यमुपतिष्ठतु येत्रश्मशानदेवास्युर्भगवंतः सनातनाः तेस्मत्सका
शात्गृण्हंतुबलिमष्टांगमक्षयं प्रेतस्यास्यशुभाल्लोकान्प्रयच्छंतुचशाश्वतान् अस्माकमायुरारोग्यंसुखंचददताच्चिरं इतिमं
त्रेणश्मशानवासिभ्योमध्यमं प्रेतायतद्दक्षिणेतत्सखीभ्यश्च दत्वास्नायात् शिष्टान्यस्थीनि गंगायांक्षिपेत् तत्प्रयोगस्तुहे
मश्राद्धंतर्पणंचकृत्वा अस्थीनिपंचगव्येनप्रोक्ष्य हिरण्यमधुतिलैःसंयोज्य मृत्पिंडेनिधायदक्षिणामुखः नमोस्तुधर्मायेत्
ति जलंप्रविश्यसमेप्रीतोस्तु इतिक्षिप्त्वा विप्रेभ्यः दक्षिणांदत्वापुनः श्राद्धंतर्पणंकुर्यात् अत्रधरादानंगोदानादिदानंकुर्वंति इ

दमधिमासेशक्रकास्तादौनकार्यंदशाहमध्येतुनदोषः अथपाथेयश्राद्धं अमुकगोत्रस्यामुकप्रेतस्यमनुष्यलोकात्प्रेतलोकं
गच्छतः पाथेयसिद्ध्यर्थंपाथेयश्राद्धंकरिष्ये इत्युक्त्वाकुशबटौइहलोकंपरित्यज्येतिप्रागुक्तमंत्रान्तेइदंते आसनमुपतिष्ठतां एव
मर्घ्यंगंधंपुष्पंधूपंदीपंआच्छादनमामान्नंचोपतिष्ठतां इतिसर्वत्रवदेत् ततःपिंडस्य दर्भासनमुपतिष्ठतु दर्भस्योपरितिलो
दकं अमुकगोत्रायामुकनाम्नेप्रेतायैकं आममुपतिष्ठतां पिंडस्योपरितिलोदकंउपति० अंजनाभ्यंजनेगंधाद्युपचाराउपतिष्ठत।मि
ति पंचपूजादक्षिणाच. अयमेवसर्वप्रेतश्राद्धानांप्रयोगः एवंनग्नप्रच्छादनश्राद्धंकुर्यात् अत्रवस्त्रदानं अथनवश्राद्धं तच्च
विषमदिनेषुप्रथमतृतीयपंचमसप्तमनवमैकादशेषुकार्यं. आमुकप्रेतत्वमुक्त्याउत्तमलोकंप्राप्त्यर्थंमात्र्योन्हिविषमश्राद्धंकरि
ष्ये ततोसिदिव्यलोकत्वंकृतांतविहितात्पथः मनसावायुभूतेनविप्रेत्वाहंवियोजयेत् इतिमंत्रेणश्राद्धंकुर्यात् प्रेतपिंडास्तुव
र्णभेदेनाशौचभेदात् यावदाशौचंप्रेतपिंडइतिस्मृत्या ब्राह्मणादिषुदशद्वादशविंशत्संख्याकाउक्तास्तथापिकलौसर्वाशौचेषु-
दशाहस्मरणात् प्रेतेभ्यःसर्ववर्णेभ्यःपिंडांदद्याद्दशैवत्वेति पारस्करोक्तेः दशैवतेचआमान्नेनेतिहलायुधः चरुणेतिशिष्टाः ब्राह्मे
सद्यःशौचेप्रदातव्याःसर्वेपियुगपत्तथा त्र्यहाशौचेप्रदातव्याःप्रथमेप्येवहि द्वितीयेहनिचत्वारस्तृतीयेपंचमेवहि अत्रदे-
शास्यकर्तुर्द्वयस्यचैक्यंज्ञेयं प्रथमेहनियद्द्रव्यंतदेवस्याद्दशाहिकं यत्रयद्दीयतेपिंडोतत्रसर्वंसमापयेदिति व्यासोक्तेः प्रथमे

हनियोदद्यात्स दशाहं समापयेदिति शातातपोक्तेः अत्रापि दद्यादिति मिताक्षराकारः पिंडं दद्यादित्यन्ये पिंडदातुर्मध्ये सरणे त
द्धं धुनाकार्या साचाविशिष्टा कार्येति केचित् आदितः पुनः कार्येत्यन्ये अथ प्रयोगः ऐशान्यां वेदिं कृत्वा तैजसे मृन्मये वा चरुं श्रप
यित्वा सक्तुना वा तिलमधुघृतयुतं कपित्थमात्रं पिंडं कृत्वा तिथ्याद्युल्का अमुकगोत्रस्यामुकप्रेतस्य मूर्धाक्षिकदंतावयवसंभूत्यै प्र-
थमाह्निकदेहपूरकपिंडदानं करिष्ये द्वितीयाह्नादौ द्वितीयेत्यादि ततः पाषाणाग्रे विष्णुं संपूज्य दर्भासनं पुनःस्तित्वं कृत्वा मुकप्रे
तेत्यादि मूर्धावयवसंभूत्यै तद्देहपूरकः प्रथमाह्न एष ते पिंड उपतिष्ठतां तिलोदकं पूर्ववत् भृंगीराजतुलसीपत्राणि पिंडं जले
क्षिपेत् अंजलिदानं तु उक्तमेव एवं दशाह्न तत्र संकल्पे विशेषः चक्षुःश्रोत्रनासामुखावयवनिष्पत्त्यर्थमिति द्वि॰ गलांसभुजव-
क्षोनिष्पत्त्यर्थमिति तृतीये विषमश्राद्ध नाभिलिंगगुदनिष्पत्त्यर्थमिति चतुर्थे जानुजंघापादावयवनिष्पत्त्यर्थमिति पंच-
मे सर्वमर्मनिष्पत्त्यर्थं षष्ठे मज्जामेदोमांसरक्तास्नुनाडीरूपावयवसंभूत्यै सप्तमे दंतलोमनखावयवनिष्पत्त्यर्थं अष्टमे वीर्या-
वयवसिद्ध्यर्थमिति नवमे विप्रभश्राद्धं क्षुत्पिपासामिति दशमे प्रत्यहमंजलिसंख्ययोदकुंभाश्च देयाः अत्यशक्तौ तु पिंड
यज्ञावृत्तौ देयं प्रेते यानं दिनत्रयमिति ज्ञेयं दशादिने त्ववयवसिध्यर्थं पिंडं दत्वा त्रिकोणां वेदीं कृत्वा प्रेतसखिभ्यः प्रेतायेयमा
यच पिंडत्रयं दत्वा पूषध्वज छत्रोदककुंभान्निवेद्य काकबलिं दत्वा तैलेनाभ्यंजनं जले क्षिप्त्वा प्रेतस्पृष्टवाससीत्यक्त्वा पुत्रपत्नी

सर्वैत्तस्य वयसश्च वपनं कुर्युः व्यासः आशौचांत्यदिने क्षौरं जनन्यांच गुरौ स्मृते आपस्तंबः अनुभाविनां वपनं अनुभाविनक निष्ठा इत्येके-
पुत्रा इत्यन्ये शवकुः स्वानुभावेन इति गौडः ततः स्नात्वा त्रिधर्मोदकांजलिं दत्वा सर्षपकल्केन तिलामलकैर्वा स्नात्वा गृहं व्रजेयुः अथैकादशाह
वृषोत्सर्गः मात्स्ये न करोति वृषोत्सर्गं तीर्थे वापि जलांजलिं न ददाति सुतो यस्तु पितुरुत्सर्ग एव सः तथा एकादशेन्हि प्रेतस्य यस्य नो
त्सृज्यते वृषः प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि नीलवृषलक्षणं ब्राह्मे लोहितो यस्तु वर्णेन मुखे पुच्छे तु पांडुरः श्वेतः खुरवृषा
णाभ्यां स नीलो वृष उच्यते चतस्रो वत्सतर्यो देयाः तत्वासंभवतोपि वा अथ प्रयोगः उपवीती तिथ्यादि संकीर्त्य अमुकगोत्रा अमुकप्रेतत्व
विमुक्त्या रुद्रलोकप्राप्त्यर्थं वृषोत्सर्गं करिष्ये नंदा च सुमनांचैव सुशीला च पयस्विनी सुरभिः पंचमी प्रोक्ता वृषमातृः प्रपूजयेत्तथा त
तः ईशाने कुंभे रुद्रं संपूज्याग्निं प्रतिष्ठाप्य ब्रह्मासनं कृत्वा प्रणीता पात्रे द्वयोर्भागयोर्जलं क्षीरे प्रणीय पायसं पिष्टचरुं च कृत्वा आदौ ईह
रतिः पवृच आज्यभागावंतः परिविततिस्मृतिरग्नये स्वाहेति षट् ततः आघारो आज्यभागौ च. ततः प्रजापतये इंद्राय यमाय सोमाय चा-
ज्यं हुत्वाग्नये रुद्राय पशुपतये शर्वाय उग्राय शमनाय भगाय महादेवायेति पायसं हुत्वा पूष्णे स्वाहेति पिष्टचरुं हुत्वा द्वयोः स्विष्टकृतं हुत्वा
आज्येन प्राजापत्यं तान वा हुती हुत्वा वृषं चतस्रो द्वे एकां वा वत्सतरीमलंकृत्य अत्र होमस्य वेदमंत्रैरुक्तेः शूद्रे होमे नेति मदनपारिजा-
तः अन्ये तु नाज्याहुतिः ततो वृषमार्भिं चतुः परिक्रम रुद्रकुंभोदकेभिषिंच वृषं गोश्च गंधवस्त्रादिभिरलंकृत्य रुद्ररूप विभाये तत्पाय मासनंगं

धंबेत्तिचतुर्भ्योदत्त्वा रुद्ररूपं प्रेतरूपिविप्रेभ्यश्चत्वार्यामान्नानि दत्वा वृषोत्सर्गश्राद्धं प्रतिष्ठार्थं दक्षिणां दत्वा वृषपदे दद्यादिति केचित्
ततो वामांगेनत्रिशूलेन दक्षिणे चक्रेण व्यत्ययेनवा वृषं गांतपित्वा कुशतिलहेमजलप्लुतं पुच्छमादाय देशकालौ वुक्ता अमुकगोत्रस्यामु
क प्रेतत्वविमुक्तिद्वारारुद्रलोकप्राप्त्यर्थं इमं वृषं वत्सतरीसहितं रुद्रदैवतममुकगोत्रायामुकप्रेतायोत्सृजामि युष्माभ्यं पतिं ददास्ये
तेनपतिना स्वच्छंदं चरत तेनश्रीरुद्रःप्रीयतामित्युक्त्वा अपसव्येन पुच्छोदकमादायामुकप्रेत इदं ते वृषवत्सतर्योः पुच्छोदकमुपतिष्ठ
तामितिपठेत् धर्मस्त्वं वृषरूपेण जगदानंदकारकः अष्टमूर्तिरधिष्ठानमतः पाहिसनातन वृषोहि भगवान् धर्मश्चतुष्पादः प्रकी
र्तितः वृणोमि तमहं भक्त्या प्रेतं स्वर्गं नयत्वसौ अयं हि यो मया दत्तः सर्वासां पतिरुत्तमः तुभ्यं चैता मया दत्ताः पत्नीः सर्वा मनोर
माः वृषएवं मयादत्तस्त्वं तारयतु सर्वदा ब्रह्मणे पूर्णपात्रं आचार्याय सहिरण्यं गोमिथुनं दत्वा विसृज्येश्वरार्पणम् कुर्यात् इतिवृ
षोत्सर्गः ततः पूर्ववन्नवश्राद्धं कृत्वा मतांतरे त्वकृत्वा महैकोद्दिष्टं कुर्यात् देशकालौ संकीर्त्य प्राचीनावीति अमुकगोत्रस्यामु-
कशर्मणः प्रेतस्य प्रेतत्वनिवृत्त्या उत्तमलोकप्राप्त्यर्थं महैकोद्दिष्टं करिष्ये इति संकल्प्यामुकगोत्र प्रेतस्य महैकोद्दि॰ क्षणमुपतिष्ठतु
एवं पाद्यासनार्घ्यगंधपुष्पधूपदीपाच्छादनानि दद्यात् घृताक्तमाममसुष्मै प्रेताय स्वाहेति हुत्वा ततो आमं परिवेष्यामुकगोत्रा-
यामुकप्रेताय इदमामं सोपस्करं प्रेततृप्त्यर्थमुपतिष्ठतामिति दत्वा पिंडार्थमन्नं धृत्वामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थं महैको

द्दिष्टेयं पिंडदानं करिष्ये पिंडस्याधो दर्भासनमुपतिष्ठतु दर्भोपरितिलोदकमुपतिष्ठतु अमुकगोत्रायामुकप्रेताय प्रेतार्थं एष-
आमपिंडमुपतिष्ठतु पुनस्तिलोदकं दत्वा गंधाद्युपचारैः संपूज्य विप्रं दक्षिणाभिः सतोष्य प्रेतालंकार वस्त्रादिपितुर्य द्वाहनादिकं सं
पूज्य गंधमाल्यैस्तत्र श्राद्धं पाके तदर्पयेत् अभिरम्यतामिति विसृज्य अमुकगोत्रस्यामुकप्रेतस्याविप्राय आमान्नदानेन विप्रतुष्टि
द्वारा प्रेता- यनमस्त्वीति भवंतो ब्रुवंतु प्रेता यनमस्तु अनादिनिधनो देवः शंखचक्रगदाधरः अक्षय्य पुंडरीकाक्ष प्रेत मोक्ष
प्रदो भव अभिरम्यतामिति पिंड प्रवाहणं कुर्यात् ततो वसुगणश्राद्धं. ध्रुवो ध्वरस्तथा सोम आपश्चैवानिलोनलः प्रत्यूषश्च प्रभा
सश्च वसवोऽष्टौ प्रकीर्तिताः अमुकगोत्रस्यामुकप्रेत वसुरूपिणः वसुगणश्राद्धेष्टौ एवं ब्राह्मणमामंत्र्य स्थानपाद्यार्घ्य गंधपुष्पधूपदी
पाच्छादनानि दत्वा अष्टावामान्नानि एवं वा मुकप्रेताया मुकगोत्राय इदमामान्नं यथाशक्ति सोपस्कर प्रेत तृप्त्यर्थमुपतिष्ठतामिति
दत्वा पिंडवर्ज्यं दक्षिणा दानांतं कुर्यात् एवं रुद्रगणश्राद्धं अजैकपादहिर्बुध्न्य पिनाकी वृषवाहनः वीरभद्रश्च गिरिशः शंकरश्च
महायशाः स्थाणुर्भर्गश्च भगवान् रुद्रा एकादशः स्मृताः अथ शय्यादानं देशकालौ संकीर्त्यामुकगोत्रस्यामुकं शर्मणः प्रे-
तस्य प्रेतत्वनिवृत्त्यर्थं शय्यादानं करिष्ये इति संकल्प्य विप्रं वृत्वा मधुपर्केणाभ्यर्च्य प्रेत प्रतिमां संपूज्य शिरः प्रदेशे घृत पूर्ण कुंभं पा
र्श्वतः सप्तधान्यानि निधाय मुक्ताफलं सूर्याये मां शय्यां सारदारुमयीं मूलिकोत्तरच्छद प्रच्छन्नां प्रेत प्रतिमायुक्तां गंडोपधान युक्तां

घृत कुंभयुक्तां सप्तधान्यान्वितां तांबूल कर्पूर कुंकुमागरुचंदन न्दीपिकोपानहछत्रचामरासनभोजनयुक्तां शय्यां तुभ्यमहं संप्रद
दे इतिसंकल्प्य ततोयथाशक्तिदक्षिणां दत्वाप्रतिगृण्हीता दानस्तुतिं पठेत् ततस्तुतिकरं धृत्वाशय्यायामुपवेशयेत् इतिश
य्यादानप्रयोगः अथमासिकानि कर्तादेशकालौसंकीर्त्यामुकप्रेतस्य आद्यमासिकोनमासिक द्वितीयत्रैपक्षिक चतुर्थपंचम
षष्ठऊनषष्ठसप्तम अष्टम नवम दशम एकादश द्वादशऊनाब्दिकानि श्राद्धानि सपिंडीकरणाधिकारसिध्यर्थं स्वस्वकाले कर्त-
व्यानि अपकृष्य मंत्रेण करिष्येति संकल्प्याद्यमासिके क्षणमुपतिष्टतामिति एवंषोडशविप्रान् कुशबटून्वानिधायाद्यमासिके इ
दं तेपाद्यं इत्येवं सर्वं नवश्राद्धवत्कृत्वा षोडशामान्नानिपिंडांश्चदद्यात् अथसपिंडीकरणं अथप्रयोगः देशकालौस्मृत्वा अ
मुकप्रेतस्य प्रेतत्वनिवृत्त्या वस्वादिपितृलोकप्राप्त्यर्थं एकोद्दिष्टपार्वणोभयात्मकं सपिंडीकरणश्राद्धं करिष्ये अस्मत्पितुः अमुक
प्रेतस्थाने क्षणं दत्वा भवद्भिः प्रसादः कर्तव्यः ततः सव्येन काम कालविश्वेदेवस्थाने क्षणं दत्वा इत्यादि अस्मत्पितामहस्यामु
कनाम्नावसुरूपस्यायेत्यादि एवमस्मत्पितुःपितामहस्यामुकरुद्ररूपस्थानेत्यादि एवमस्मत्पितुः प्रपितामहस्यामुकस्यादित्यरू
पस्थाने इत्यादि एवंषड्विप्राः कुशबटवोवा अक्रोधनैः शौचपरैरितिजपः सर्वत्रप्रेतस्थाने नवश्राद्धवत् पित्र्ये पार्वणवत् ततःपरे
द्युः संकल्पः पुनः क्षणंदत्वा देवे चतुरस्रमंडलं कृत्वा तद्दक्षिणे प्रेताय तृकोणं पितृभ्यो वर्तुलं कृत्वा क्रमेण पाद्यं दत्वाचम्य कामकालस-

ज्ञका विश्वेदेवाः संमाध्वंप्रेतः समास्व प्रेतस्यापितृपितामहाः समाध्वमित्यासने चूपवेश्य नीवीबंधनंकृत्वा उपक्रांतंश्राद्धक
र्मकरिष्ये कुरुष्वेत्युक्ते कामकालसंज्ञकानामित्यासनंस्करवासनं ॐअत्रास्यतांधर्मोसि देवेक्षणः क्रीयतां तथाप्राप्नुवानि ए
वंद्वितीयदेवे ततो अर्घ्यपात्रे संपन्नेस्कसंपन्ने इत्युक्त्वा कामकालसंज्ञकान् विश्वान् देवान् भवत्सुयथायथं आवाहयिष्ये.
आवाहयेत्युक्ते काम कालसंज्ञकेभ्योनमः आगच्छंतु महाभागा इति आवाह्य कामकालसं० इदंवो अर्घ्यमिति विप्रहस्ते दत्वा
पात्रंन्युब्जं कृत्वा गंधपुष्पधूपदीपाच्छादनंच दत्वा • पूर्णतां वाचयित्वा पसव्येन पितुः अमुकगोत्रस्य अमुकस्येदमासनमुपति
ष्ठतां स्वासनं प्राप्नोतु भवानित्यादि अतः पितुः पित्रादीनां पार्वणवदासनादि दत्वा चत्वार्यर्घ्यपात्राणि तत्राद्ये चत्वारि पवित्रा-
णि त्रिपुत्रीणि • ततोमुकगोत्रामुके प्रेतएषतेर्घ्यमुपतिष्ठतामिति दत्वा अद्येत्यादि अमुकगोत्रस्यामुकप्रेतस्यार्घ्यं पितृपिताम
हार्घैः सहसंयोजयिष्ये इति संयोजयेत् एकंपवित्रंपितृपात्रे दत्वा मुकगोत्रामुकप्रेतस्व पुत्रामुकेन वसुरूपेण सह संमृज्य स्व
सायुज्यं गच्छेति तदर्घ्यं निर्नीयेवं तत्पितामहेन रुद्ररूपेणेति द्वितीये स्वप्रपितामहेनादित्यरूपेण सहेति तृतीये ततः षडवानुगंतः
प्रेतः पितरस्तद्वदामिवः शुभंभवतु शेषाणां जयतां चिरंजीविना इत्यभिमृशेत् ससर्जनोत्तरं प्रेतार्थार्घ्यदानमिति. दानपा
त्रः ततः प्रेतपित्रादिभ्यः पार्वणवदर्घ्यत्रयं दत्वा न्युब्ज पात्रं कृत्वा गंधपुष्पधूपदीपाच्छादनांतं कृत्वा प्रेताय तत्पित्रादिभ्यश्च दत्वा संपूर्ण

तांवाचयित्वा प्रेताय यमाय चेयमाहुतिरुपतिष्ठतामिति पाणौ हुत्वा तत्पित्रादिषु चाग्नौकरणं कृत्वा देवे पित्रे तत्पित्रादिषु-
चामान्नानि संकल्प्योच्छिष्टपिंडं विकिरं च दत्वा गृहपाकानुसारेण स कुशिर्वा प्रेताय तत्पित्रादिभ्यः पिंडान् दत्वा अद्येत्यादि अमु-
कगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्या वस्वादिपितृलोकप्राप्त्यर्थं तस्मिन्पिंडे पितृपितामहप्रपितामहानां अमुकगोत्राणां अमु-
कदानां वसुरुद्रादित्यस्वरूपाणां पिंडैः सह संयोजयिष्ये तत्पिंडं त्रेधा कृत्वैकं भागं मधुनादाय कश्यपगोत्रामुकप्रेत पित्रा मु-
कगोत्रेणामुकवसुरूपेण सह संयुज्यि एषते पिंडः तस्मै ते स्वधा नमः एवं द्वितीयं भागं पितामहेन रुद्ररूपेण तृतीयं भागं प्र-
पितामहेणादित्यरूपेण ततः एषवोनुगच्छंतः इति मा गुक्त मंत्र मुक्त्वा पिंडपूजादि कृत्वा दक्षिणां दत्वा मोक्षधेनुं दत्वा शेषं समा-
पयेत् ततः पाथेयश्राद्धं कृत्वा वर्षांत यावत् प्रत्यह मुदकुंभश्राद्धं स्वस्व काले मासिकानि च कुर्यात् इति श्रीगागाभट्टकृते कायस्थध-
र्मदीपे सपिंडीकरणप्रयोगः ४९ अथामावास्याश्राद्धप्रयोगः कर्ता श्राद्धदिने पूर्वेद्युः प्रातः सकृन्निरामिषं भुक्त्वा सायं वा द्विजगृहं ग-
त्वा प्रणतिपूर्वं मम करिष्यमाणपार्वणश्राद्धे विश्वेदेवार्थे क्षणः कर्तव्यः इति कुशेन फलतांबूलेन वा ब्राह्मणं निमंत्रयेत् एवं द्वितीयं ताभ्यां
तथोक्ते अक्रोधनैः श्राद्धकर्मणः इति मंत्रं पठेत् परैरिति श्लोकं पठेत् पूर्वेद्युरिति मंत्रे सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ३७
भवद्भिर्भवितव्यं नश्वो भूते श्राद्धकर्मणि इति मंत्रं पठेत् ततस्तथैवापसव्येन करिष्यमाणश्राद्धे पितृस्थाने त्वामहं निमंत्रये एवं पिता

महस्थाने प्रपितामहस्थाने च. एवं मातामहादिस्थाने त्रय इति षट् वैश्वदेविके द्वावित्यष्टौ अशक्तौ वैको वैश्वदेवे पितृपार्वणे चैकैक-
मेव एको मातामह इतीमंत्रयः ततस्तद्दिने परे घुर्वा षण्मुहूर्तानंतरं द्विजानाहूय तेषामनिषिद्धदिने श्मश्रूकर्म कारयित्वा स्ना-
नीयजलं तैलामलकोद्वर्तनादि दत्वा मध्यान्हे स्नातानागतान् प्रांजलिस्तिष्ठन् स्वागतं स्पृष्ट्वा स्करवागतमितिते रुक्ते द्विसचम्य देश-
कालौ स्मृत्वास्मत्पितृपितामहप्रपितामहानांऽमुकगोत्राणामसुकनाम्नां वसुरुद्रादित्यस्वरूपाणां पार्वणश्राद्धं सपिंडं सदैवं-
पार्वणविधिना हविषा सद्यः करिष्ये गोमूत्रगोमयाभ्यां द्वारे प्रादेशमात्रमुत्तरदक्षिणयोः चतुरस्रं वृत्तं च मंडलं च कृत्वा तत्र कुशा-
न् देवे यवान् पित्रे तिलान् क्षिप० ततउत्तरउदङ्मुखः सव्येन पुरूरवार्द्रकसंज्ञकाविश्वेदेवाः इदं वःपाद्यंनंमम इति वादयो जलं द-
त्वा एवं देवे द्वितीये विप्रे दत्वा पित्र्ये विप्रे कृतापसव्योऽस्मत्पितः अमुकशर्मन् गोत्रासुकवसुरूपपाद्यं एवं पितामहे च रुद्ररूपा-
दित्यरूपे ज्ञेयम् · एवं मातामहादिके च· ततो द्विराचांतः स्नात्वाचम्य देवौ द्वौ प्राङ्मुखौ देवेभ्यो नमः इदंमासनमास्यतामिति
थामेनासनं स्पृष्ट्वा दक्षिणेन विप्रानुपवेश्य एवं पित्र्ये अपसव्येन उदङ्मुखान् ततः प्राच्यां मातामहानां श्राद्धारंभेऽवसाने च पा-
दस्पर्शे तथार्चने· विकिरे पिंडदाने च द्विराचमनमिष्यते ततः सव्येन अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा यः स्मरेत्पुंडरी-
काक्षं स बाह्याभ्यंतरे शुचिः पुंडरीकायनम इति श्राद्धीयद्रव्यं प्रोक्ष्य तिलारक्षंत्वसुरानिति तिलान् विकिरेत् दीपान् दद्यात्

आमान्नादीनां पवित्रतास्तु केचित्तु सप्तव्याधा दशार्णेषु मृगाः कालांजने गिरौ चक्रवाकाः सरोद्वीपे हंसाः सरसि मानसे ते
पिजाता कुरुक्षेत्रे ब्राह्मणा वेदपारगाः प्रस्थिता दीर्घमध्वानं यूयं तेभ्यो वसीदथ अमूर्तानां च मूर्त्तानां पितॄणां दीप्ततेजसां
नमस्यामि सदा तेषां ध्यायीनां योगचक्षुषां श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरं वस्वादींश्च पितॄन्ध्यात्वा ततः श्राद्धं प्रव-
र्तते ततोपसव्येन देवताभ्यः पितृभ्यश्च महायोगीभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिर्जप्त्वा
देशकालौ स्मृत्वा · अमुकगोत्राणां अस्मत्पितृपितामहप्रपितामहानाममुकनाम्नां तथा गोत्राणामस्मन्मातामह प्रपितामह प्र-
मातामह वृद्धप्रमातामहानाममुकनाम्नां सदैवं उपक्रांतं पार्वणश्राद्धं करिष्ये कुरुष्वेति तैरुक्ते पुरूरवार्द्रवसंज्ञका विश्वेदेवाः इ-
दमासनं कुशपात्रमासने देवेक्षणः क्रियतामिति कुशं दत्वा तथेत्युक्ते प्राप्नोतु भवानित्याह प्राप्नुवानीति विप्रः एवं द्वितीयदेवे ततो
देवाग्रे पात्रद्वयं कुशद्वये स्थापयित्वा तत्र जलं यवान् गंधपुष्पाणि क्षिप्त्वा विश्वान्देवान् आवाहयिष्ये इति पृष्ट्वावाहयेत् अनु-
ज्ञातः यवैः आगच्छंतु महाभागा विश्वेदेवा महाबलाः ये अत्र विहिताः श्राद्धे सावधाना भवंतु ते इति द्विजकरांगुष्ठं गृहीत्वा विश्वे
देवा आगच्छंतु इति आवाहयेत् ततो देवपात्राणि संपन्नानि इति पृष्ट्वा तैः सुसंपन्नानि देवकरे पवित्रे दत्वा देव इदं वो अर्घ्यं नम इ-
त्यर्घ्यं दत्वाद्भ्यो नम इति संस्रवं धृत्वा एवं द्वितीयं दत्वा पात्रे पवित्रादि कृत्वा देवेभ्यः स्थानमसीति पात्रमुत्तरतो न्युब्जं कुर्यात्

केचिन्युक्तता देवेनेछंति । ततो विश्वेदेवा एषवोगंध इमानि पुष्पाणि एषधूपः एषदीपः इदमाछादनं इदंयज्ञोपवीतं एषोलंकारः
इदंतांबूलमिति दत्वा देवार्चनंसंपूर्णतामित्यर्च्य पूर्णतांवाचयेत् ततोयुष्मदनुज्ञया पित्र्याद्यर्चनं करिष्येति पृष्ट्वा कुरुष्वेति अनुज्ञातोप
सव्येन वामंजान्वाच्यास्मत्पितुरमुकनाम्नो वसुरूपस्येदमासनंस्वधानमइति वामेद्विगुणमुग्नान्कुशान्दत्वा एवंपितामहादौमा-
तामहादौ कृत्वा पित्र्यक्षणः क्रियतामिति प्रार्थ्य तथेत्युक्तः प्राप्नोतुभवानिति प्रार्थ्य प्राप्नवानित्युक्तः एवंपितामहादौमातामहादौ
चकुर्यात् - ततः पित्र्यब्राह्मणादौ कुशेषु षट्पत्राणि संस्थाप्य तेषु जलंतिल गंधपुष्पंच दत्वा - गोत्रंपितरं वसुरूपं भवत्सु आवाहयि
ष्ये इतिस्पृष्ट्वा वाहयेत् । अनुज्ञात पितृनावाहयामीति मूर्धादि पादांततिलान्विकिरेत् एवंपितामहादौ कृत्वापितृपात्राणि संप
न्नानीति पृष्ट्वा सुसंपन्नानीत्यनुज्ञातः सव्येनपितृ विप्रकरे मपवित्रं दत्वा पितरिदंतेर्घ्यंस्वधेत दत्वा अद्भ्योनम इतिसंस्रवं धृत्वैवंपिता
महादौ कृत्वा पितृभ्यः स्थानमसीतिपात्रन्युब्जीकरणं ततोपसव्येन पितरेषते गंधपुष्पधूपदीपाछादनानियज्ञोपवीतालंकार
तांबूलानि सर्वेषु दत्वार्चनसंपूर्णतांवाचयेत् ततो द्विजाग्रे भुवं संमृज्य पलाशादिपत्रावलीअन्यस्य गोरमृद्भस्मादि मंडलं कृत्वा श्राद्धी
यादामात्रात् अग्रंगृहीत्वा अग्नौ करणंकरिष्य इति पंक्तीमूर्धन्यं पृष्ट्वा कुरुष्वेत्युक्त्वा सव्येनाग्रकरेपर्युक्ष्य दर्भानास्तीर्य वदानधर्मेण
हविरवदाय । अग्नयेकव्यवाहनायनमः अग्नयेकः चंदनं सोमायपितृमतेनमः सोमायचंदनं अपसव्य पक्षे सोमाहुतिः पूर्वं अग्न्या

हुतिरुत्तरा इतिहुत्वा शेषंपिंडार्थं अवशेष्यपितामहादिमातामहादि पात्रेषु तूष्णीं दद्यात् ततः पात्राण्यभिघार्य देवपूर्वमामंचतुर्गु
णंसमंवा दत्वा दैवेदक्षिणंजान्वाच्य यज्ञोपवीति दक्षिणोत्तानसव्यपात्रंलक्ष्य विष्णवेनमः इतिविष्णो हव्यंरक्षस्वेति वा द्विजांगुष्ठ-
निवेश्यैवंपित्र्येपसव्येन पात्रमालभ्यांगुष्ठंदत्वा तिलान्विकीर्योदकंस्पृष्ट्वा एवंप्रतिपात्रंकृत्वा वामेन देवपात्रं धृत्वा दक्षिणेकुशय-
वान्वादाय पुरुरवार्द्रवसंज्ञका विश्वेदेवा इतिमंत्रेण आमान्नंसपरिकरं गयेयंभूः गदाधरोभोक्ता अयंच ब्रह्मगृहीता ब्रह्मरूपमामा
न्नं कल्पितरूप्यवर्णपात्रस्थमक्षय्यवटछायास्यं पुरुरवार्द्रवेति अक्षय्यतृप्त्यर्थंसंप्रददे स्वाहा नमम इदमामंसोपस्करममृतरूपेण
संपद्यतां हव्यंनमः काश्यांविश्वेश्वरपदेदत्तमक्षय्यमस्तु गयागदाधरःप्रीतोभवतु ततोपसव्येन द्विगुणभुग्नकुशतिलान्यादाय
वामे तत्पात्रं धृत्वामुकगोत्रास्मत्पितःअमुकतृप्ते आमान्नंसपरिकरंगयेयंभूरित्यादि रजतपात्रस्थमक्षय्यवटछायेयं गोत्रायास्मत्पित्रे
मुकनाम्ने वसुरूपाये दमामं सोपस्करं मक्षय्यतृप्त्यर्थंसंप्रददे स्वधा संपद्यतां कव्यंनमः काश्यामित्यादि प्राग्वत् एवंपितामहाय प्रपि
तामहाय मातामहादिभ्यश्च दद्यात् असंस्कृतप्रमीतेभ्य एषपिंड इतिविकिरंदद्यात् उच्छिष्टपिंडोनम इति सोदकपिंडंदत्वा तिलो
दकं दत्वा मधुमध्वीतिनिर्जपेत् अथपिंडदानं तच्चगृहपाकेन पायसेन सक्तुभिर्मूलेन फलेन वा कार्यं पिंडार्थं वेदीं कृत्वा अपसव्ये
न दर्भमूलेन दक्षिणाग्रां रेखां कृत्वैवं द्वितीयंकृत्वा आपस्पृष्ट्वा रेखायां हस्तेन पितरः शुन्धंतां पितामहाः शुन्धंतां प्रपितामहाः शु-

हृंतामिति॰ जलं दत्वैवंतिस्रोदकमेव द्वितीयरेखायां मातामहादिभ्यश्च स्त्रीभ्योदत्वा सकृदाच्छिन्नकुशान्दक्षिणाग्रान् रेखाद्वये-
निक्षिप्य मधाज्यं अग्नौकरणं शेषं सहितं पात्रे कृत्वा पिष्टमयान्वा षट्पिंडान् पिदृतिथ्ये मुकगोत्रस्य पितामुक एतत्तेन्नं स्वधा एष ते-
पिंडो इति वा दत्वा इदं पित्रे एवं अामुकगोत्रास्म त्पितामहेत्यादिनात्रिभ्यो दत्वा लेपभुग्भ्यो दर्भमूलेषु करं मार्जयित्वैवं मातामहादिभ्यो
त्रिन्दत्वा. करौ प्रक्षाल्याचम्यो दङ्मुखः स्वश्वासं नियम्य पुनरावृत्यापितृभ्योनमः मातामहेभ्यो नम इति नत्वा पिंडशेषमवघ्राय चम्यामुक
गोत्रा स्मत् पितरः आमुकंनमम सिद्धस्वेति जलं पिंडोपरिदत्वा एवं पितामहा मातामहादिपिंडेषु॰ ततोभ्यंजनं स्वेत्येव मभ्यंजनं पितरो वास इ
ति वस्त्रं सूत्रं वा प्रति पिंडं दद्यात् ततो दक्षिणाभ्यः पितृभ्यश्चेति त्रिर्जप्त्वा सव्येनं पिंडेषु पितादिनाम्नां गंध पुष्प धूपदीपनैवेद्य तांबूलं
नि दक्षिणादिनिवे घजलं रू प्रोक्षितमस्त्व शिवा आपः संतु सौमनस्यमस्त्व पुष्पाक्षतं चारिष्टं चास्त्व अक्षताप सव्येन पितृभ्यो-
पितामहेभ्यश्च दत्वा दीर्घमायुः शांतिः पुष्टिः तुष्टिश्चास्त्व पुरूरवा द्रवसंज्ञक इति यद्दत्तमामान्नादि तदक्षय्यमस्त्व. एवममुकगोत्र-
स्यास्मत्पितरः अमुकस्य यद्दत्तमित्यादि एवं पितामहादौ अस्त्वक्षय्यं इति विप्राः अघोराः पितरः संतु एवं मातामहाः गोत्रन्नो वर्ध
तां. दातारो नोभिवर्धतां संततिश्च श्रद्धा च नो मा व्यगमत् बहुधेयं च नोस्त्व अन्नं च नो बहु भवेत् अतिथींश्च लभेम हि याचितारश्च नः संतु
मा च याचिष्म कंचन तथास्त्विति विप्राः ततः पित्रादिभ्यश्च स्वधोच्यतां अस्तु स्वधेति विप्राः अर्घ्यपात्रं मुत्तानं कृत्वा देवानां

गा॰ का॰ स्रुवर्णपितॄणांरजतं दक्षिणांदत्वा पिंडानुद्वास्य सव्येनदेवाः स्वस्तीतिब्रूयुः अपसव्येन पितरःस्वस्तीतिब्रूयुः स्वस्ती प॰ प्र॰
४० तिंप्रतिवचनंसंपूर्णतांवाचयेत् ॥ इतिगागाभट्टकृतेकायस्थधर्मदीपे आमावास्यश्राद्धप्रयोगः ॥ ॥ २
॥ गागाभट्टेनविदुषानत्वाश्रीराममादरात् उक्त्वाकायस्थसंस्कारान्कायस्थान्हिकमुच्यते ॥ ॥ ६५ ॥ ॥

इतिगागाभट्टकृतकायस्थपद्धतिद्वितीयप्रकरणंसमाप्तः

अथ गागाभट्टकृत कायस्थपद्धतिः तृतीयप्रकरणं प्रा०

श्रीगणेशाय नमः अथाह्निकप्रयोगः ब्राह्मे मुहूर्ते शयनादुत्थाय परमेश्वरं स्मृत्वा पुनरुत्थाय बोद्धव्यम् केमद्यस्य कृतं कृतं
दत्तं वा दापितं वापि या कृसत्या परिभाषिता उत्थायोत्थाय बोद्धव्यमहद्भयमुपस्थितं मरणव्याधिशोकादि किमद्य निपतिष्यति
पठित्वा प्रातः स्मरामीति इष्टदेवतास्मारकश्लोकान्पठित्वाचम्य नैर्ऋत्यादिषु उदङ्मुखो मूत्रपुरीषोत्सर्गं कुर्यात् रात्रौ दक्षिणामुखः
उपवीतं स्वकर्णे निधाय केचिदिच्छंति ततो गृहीतशिश्न उत्थाय कृष्णमृदा जलेन हस्तादौ गंधक्षयकरं गुदादौ लेपक्षयकरं शौ-
चं कुर्यात् अस्या अभावेन्यापि मृत् मृत्संख्या च शातातपोक्ता एका लिंगे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः मूत्रशौचे समाख्यातं मि
ति एका लिंगे गुदे तिस्र दश वामकरे तथा उभयोः सप्त दातव्या मृदः शौचोपपादिताः तिस्रस्तु पादयोर्ज्ञेया इति स्त्रीशूद्रयोर्ध
मानं तु कुर्याच्चैवं मनीषिभिः इत्यादि तस्यार्धशौचविषयकमित्यादि स्त्रीशूद्राणामशक्तानां बालानां चोपनीतितः गंधलेपक्षय
करं शौचं कुर्यान्न संख्ययेति स्मृत्यर्थसारात् कायस्थानां मृत्संख्यानियमो नास्तीति केचित् विण्मूत्रादि कर्तुमुपविष्टो यदि न क
रोति तदाप्यर्धशौचं विवाहात्पूर्वं न मृत्संख्यानियमः भोजनकाले गुदस्नाने आदौ शौचं कृत्वा पश्चाद्गंडूषादिकरणं ततः उपवा
सः पंचगव्यप्राशनं चेति एवं शौचं विधाय वस्त्रेणोपवीते कृत्वा उदङ्मुखः षडंगुलं चतुरस्रं वा क्षीरजं दंतधावनं भक्षयेत् नारदः १
अभावे दंतकाष्ठानां निषिद्धायां तिथौ तथा अपां द्वादशगंडूषैः कुर्याद्वा दंतधावनं निषिद्धदिनानि प्रतिपच्चतुर्दशी अष्टमीपौ

-र्णमासीसंक्रांतिर्नवमीश्राद्धंचेति मृष्टिकालोष्ठपाषाणैर्नखैरंगुलिभिस्तथा मुक्त्वाचानामिकांगुष्ठं नकुर्याद्दंतधावनं. एवंदंतधावनं
कृत्वास्यंस्काचम्य केशान्प्रसाध्य प्रातःस्नानंनद्यादौनमस्कारमंत्रेणकुर्यात् गृहेषुमंत्ररहितं ब्रह्मक्षत्रविशांत्वेवंमंत्रवत्स्नान-
मिष्यते तूष्णीमेवांतुलोमादौसनमस्कारकंस्मृतंतच्च प्रातःसंध्यामुपासीतदंतधावनपूर्वकामिति याज्ञवल्क्यवचसा तस्याव
श्यकमितिवाच्यं गृहस्थस्यास्यप्रकरणपठितस्यास्यगृहस्थंप्रतिदंतधावनविधानमात्रेतात्पर्यात् तस्यचफलंब्रह्मचारिणोदंतधा
वननिवृत्तिरिति तत्रापिसर्वापिमध्यान्हस्नानेतिकर्तव्यताज्ञेया अशक्तौसंक्षेपमाह .तीर्थेमृदाजलेनचपादौप्रक्षाल्याचम्य .द्वि
वासा एकवासाजलंप्रविश्य कृतनिमज्जनः पवित्रपाणिः प्राणानायम्यदेशकालौस्मृत्वा मलक्षयार्थंप्रातःस्नानंकरिष्ये इतिसं
कल्प्य नद्यांप्रवाहाभिमुखोतडागादौसूर्याभिमुखः द्वादशकृत्वानिमज्ज्य पूर्वाभिमुखोघमर्षणार्थंद्वादशवारंनम इति मंत्रमु
च्चार्य द्वादशवारंत्रिः सकृद्वानिमज्ज्याचम्यद्वनिमंत्रमुच्चार्य देवांतर्पयामीतिदेवतीर्थेनांजलित्रयंदत्वानिवीति वम इतिमंत्रमु
च्चार्यऋषींस्तर्पयामीति द्वौद्वावंजलित्रयंप्रजापतितीर्थेनदत्वादक्षिणामुखः प्राचीनावीतीनम इतिमंत्रमुच्चार्यपितॄंस्तर्पयामीति
पितृतीर्थेनांजलित्रयंदत्वा ततस्तीरपरिहितवस्त्रैकदेशंनिष्पीड्योपवीत्येकंपादमंतर्जलेपरंचतीरेनिधायद्विराचम्य श्वेतरक्त
वासोयुगंप्रोक्ष्यैकंपरिधायापरंपरिवीयमृदातिलकंकृत्वा नम इतिमंत्रेणसूर्यंध्यात्वा यथासंभवंमृद्गोमयंकुशदूर्वायुतताम्र

पात्रेणांजलिनावाकुशपुष्पाक्षतयुक्तं नमः संवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मधारिणे वि
रंचिनारायणशंकरात्मने इति मंत्रेण सूर्यायार्घ्यं दत्वा वस्त्रं निःष्पीडनं विधायाचम्य महद्भ्यो नत्वा गृहे स्वेष्टदेवतार्चनमाचरेत्
यस्य मंत्रदीक्षास्ति तेन स्नानानंतरं आगमोक्तप्रकारेण स्नानादिकं कार्यमेवा अशक्तो कंठस्नानं वाससा गात्रप्रोक्षणं वा तीर्थोदकप्रो
क्षणं अथ प्रातःसंध्या विधिनाचम्य अग्निवायुसूर्यप्रजापतिमन्वादिलोकाधिपतिभ्यो नमः इति प्राणायामस्य त्रिवारं पठेत्
अयमेकः प्राणायामः एवं त्रीन्प्राणायामान्कृत्वा मम रात्रिकृतदुरितक्षयार्थं प्रातःसंध्यां करिष्येति संकल्प्य तीर्थे तीर्थस्थि
ताभिः गेहे वामहस्तस्थिताभिः ताम्रपात्रस्थिताभिर्वा अद्भिर्मार्जनं कुर्यात् . तत्र मंत्रः इमा आपः शिवाः शिवतराः शंतमाः शंतम
तराः पूताः पूततमा अमृता अमृततरा मेध्यास्तमं ऊर्जे बलाय पुष्ट्यै क्षेमाय संतु इति मार्जयित्वा सूर्यो ज्योतिषी रात्रिकृतेस्वा
हेति सकृदाचम्य त्रिराचमेत् पुनस्तेनैव मंत्रेण मार्जयित्वा . सत्याय ऋताय तपसे राज्यै समुद्राय संवत्सराय अहोरात्रेभ्यः
सूर्यचंद्राभ्यां रात्रे द्यावापृथिव्यंतरिक्षेभ्यो नमः इति नासाग्रस्पृष्टजलं त्यजेत् ततो आचम्य यथाशक्ति स्वमंत्रं जपेत् ततः सूर्या
य नमस्कृत्य प्राच्यै दिशे इंद्राय नमः दक्षिणायै॰ यमाय॰ प्रतीच्यै॰ वरुणाय॰ . उदीच्यै॰ सोमाय॰ ऊर्ध्वायै॰ ब्रह्मणे न॰ अ
धरायै॰ कूर्माय नमः इति दिशामधिपतीन्नमस्कुर्यात् अग्नये ब्रह्मणे क्ष्मायै ओषधीभ्यस्तथैव च वाचे च वाचस्पतये विष्णवे

वनमो नमः इति मंत्रं पठित्वा प्रदक्षिणां कुर्यात् ततो नमोस्त्वनंतायेति पठित्वा पुरोहितगोत्रप्रवरानुच्चार्य स्वनक्षत्रनाम गृही
त्वा अमुकनामाहं भो गुरो अहमभिवादये इति गुरुं नमस्कुर्यात् इति प्रातःसंध्या एवमेव सायंसंध्यापि अथ मध्याह्नकृ
त्यं संध्या मध्याह्ने सूर्ये यथाविभवं मृद्गोमयं कुशदूर्वापुष्पातिलयवानादाय तीर्थं गत्वा शुचिदेशे मृदादि संस्थाप्य पृथक्कृतप्रामृ
दाहस्तौ पादौ संशोध्याचम्य प्रोत्तरीयेणोत्तरीयावाबद्धशिखो वरुणं संपूज्य सकृन्निमज्याचम्य देशकालौ स्मृत्वा मध्याह्नस्नानं
करिष्ये इति संकल्प्य मदस्तृतायोशानेरम इति मंत्रेण शिरोनुलिप्यापरं परेण मुखमारभ्य नाभिपर्यंतं नम इति मंत्रेणानुलिप्याप
रेण तेनैव मंत्रेण नाभेरधः सर्वमनुलिप्य निमृज्याचम्य प्रातःस्नानवदेवाघमर्षणं कृत्वा स्नानांगतर्पणादि प्रातःस्नानवदेव कार्यं
गोमयं पाक्षिकमिति केचिदाहुः अथ ब्रह्मयज्ञप्रयोगः स चार्वाक्तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः वैश्वदेवावसाने वा नान्य
दर्तेरिवंधनादिति नमस्कारेण मंत्रेण पंचयज्ञान्न हापयेदिति वा आचम्य देशकालौ स्मृत्वा ब्रह्मयज्ञेन यक्ष्ये इति संकल्प्य
दर्भेषूपविश्य दर्भगर्भब्रह्मांजलिं कृत्वा पद्मासनेनोपविश्य नमस्कारमंत्रं नमो नम इति त्रिरुच्चार्य यथाशक्ति स्वमंत्रं जप्त्वांते यज्ञ
इति उक्त्वा दर्भान्परित्यज्योपस्पृश्याचामेत् केचित्तु देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव न
मो नमः इति मंत्राभ्यां समाहुः अथ तर्पणप्रयोगः तच्चांतर्जले बहिर्जले वा आहुः देवेभ्यः एकोंजलिः ऋषिभ्यो द्वौ द्वौ पितृ

ष्यस्मय: सर्वेभ्योवारस्त्रयस्त्रयः पितॄणांतिलांभिःअपसव्यान्वारब्धेन दक्षिणपाणिना वा देवर्षीणां तिलानामप्यलाभेतु स्व
वर्णरजतान्वितम् तद्वाभावेनिषिंचंतु दर्भैर्मन्त्रेणवायथा तर्पणंयदेकेनहस्तेनं तदावामहस्ते तिलग्रहणं उद्धृतजलेनतर्पणे
तुतिलैरुदकस्यमिश्रीकरणंकार्यं ब्रह्मयज्ञोत्तरंदेवयज्ञपितृतर्पणंकरिष्ये इतिसंकल्प्य सव्यंजान्वाच्य ब्रह्माणंतर्पयामि
विष्णुं॰ चंद्रं॰ प्रजापतिं॰ देवान्॰ नागान्॰ ऋक्षाणाम्॰ तरून्॰ जृंभकान्॰ नागान्॰ विद्याधरान्॰ जलचरान्॰ आकाशं॰ खगा-
न्॰ निराधाराश्चयेजीवास्तांस्तर्पयामि पुण्येतैरास्तान् अथनिवीति सनकं॰ सनंदनं॰ सनातनं॰ कपिलं॰ आसुरिं॰ वायुं॰ पंच
विश्वं॰ मरीचिं॰ अंगिरसं॰ पुलस्त्यं॰ पुलहं॰ क्रतुं॰ प्रचेतसं॰ वसून्॰ भर्गं॰ नारदं॰ इतिऋषिः अथप्राचीनावीति दक्षि-
णाभिमुखः अग्निष्वात्तान्तर्पयामि सोमं॰ हविष्मंतउष्मपान्॰ सुकालिनः बर्हिषदः आज्यपान्॰ ततः स्वपित्रादितर्पणं॰त
द्यथा अस्मत्पितरंतर्पयामि॰ पितामहं॰ प्रपितामहं॰ मातरं॰ पितामहीं॰ प्रपितामहीम्॰ मातामहं॰ मातुःपितामहं॰ मातु
प्रपितामहम्॰ मातामहीं॰ मातुःपितामहीं॰ मातुःप्रपितामहीं॰ गुरुं॰ गुरुपत्नीं॰ पुत्रं॰ कन्यां॰ पितृव्यं॰ तत्पत्नीं॰ मातुलं॰
मातुलपत्नीं॰ सुहृदं॰ इति ततो येबांधवाबांधवाः येयेन्यजन्मनिबांधवाः तेतृप्तिमखिलांयांतु येचास्मत्तोभिवांछित मित्यं-
जलित्रयंदत्वा येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः तेगृण्हंतुमयादत्तंवस्त्रनिष्पीडनोदकं इति वस्त्रंनिष्पीड्य तर्प

णकुशान्त्यक्त्वाचम्य ब्रह्मणे॰ रुद्राय॰ सवित्रे मित्राय॰ वरुणाय॰ नम इति मंत्रेण सूर्याय॰ पुष्पांजलिषट्कं जले प्रक्षिप्य नमो विव
स्वते ब्रह्मन् मरुते विष्णुतेजसे जगत्पवित्रे शुचये सवित्रे कर्मदायिने इति मंत्रेण सूर्याय जलांजलिं दत्वा गृहे इष्टदेवताः षोड-
शोपचारान् कुर्यात् . अत्रैव द्वितीयास्थाने प्रथमामुच्चार्य तृप्यतु तृप्यतामिति चोच्चारः अथ आश्वलायनोक्तप्रकारः प्रजापतिस्तृप्य
तु ब्रह्मा. वेदाः ऋषयः सर्वाणि छंदांसि. ओंकारः वषट्कारः व्याहृतयः सावित्री. यज्ञाः द्यावापृथिवी. अंतरीक्षं. अहोरा
त्राणि. सांख्याः सिद्धाः समुद्राः॰ नद्यः गिरयः क्षेत्रौषधिवनस्पतिगंधर्वाप्सरसः नागाः वयांसि. गावः साध्याः विप्राः यक्षाः र
क्षांसि॰ भूतानि॰ एवमंतानि अथ ऋषयः शतर्चिनस्तृप्यन्तु॰ माध्यमाः गृत्समदः विश्वामित्रो॰ वामदेवः भरद्वाजः वसिष्ठः
प्रगाथाः पावमान्यः क्षुद्रसूक्ताः महासूक्ताः प्राचीनावीती. अत्र जीवत्पितृकेऽपसव्ये विशेषमाह अपसव्यं द्विजाग्र्याणां पित्र्ये
सर्वत्र कीर्तितं . आप्रकोष्ठात्मकर्तव्यं मातृपित्रोस्तु जीविते इति आचारात् सुमंतजैमिनिवैशंपायनपैलसूत्रभाष्यभारतमहा-
भारतधर्माचार्यास्तृ॰ जानंति बाहवीगार्ग्यगौतमशाकल्यबाभ्रव्यमांडव्यमांडूकेयास्तृ॰ गर्गी वाचक्नवी॰ वडवा प्राचीथेयी॰
सुलभा मैत्रेयी कहोलं तर्पयामि॰ कौषितं महाकौषीतकं पैंग्यं महापैंग्यं सुयज्ञं सांख्यायनं ऐतरेयं महैतरेयं शाक
लं बाष्कलं. सुजातवक्त्रं औदवाहिं महौदवाहिं सौजामिं शौनकं आश्वलायनं, ये चान्ये आचार्यास्ते सर्वे तृप्यंतु अत्र कारि

गा॰ का॰ का त्रिंशद्भिरेकेमासैस्तु द्वादशैश्चतथाभवेत् त्रयोविंशतिवाक्यैस्तुदेवर्षिश्चपितृक्रमात् इति अस्मत्पितरममुकगोत्रममुक
४ शर्माणंवसुरूपंतर्पयामि एवंपितामहंप्रपितामहं मात्रादीन्मातामहादीन्सपत्नीकान्पितृव्यंमातुलंभ्रातृपितृस्वसा आत्म- प॰ प्र॰
स्वसायथायोग्यंसपत्नीकान् सबांधवान्सतनयांश्चश्वशुरंगुरुंचतर्पयेत् आब्रह्मस्तंभपर्यंतं देवर्षिपितृमानवाः तृप्यंतुपि- ३
नरः सर्वेमातृमातामहादयः अतीतः कुलकोटीनांसप्तद्वीपनिवासिनां आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकं येकेचास्मत्कु
लेजाता अपुत्रागोत्रिणोमृताः तेगृह्णंतुमयादत्तंवस्त्रनिष्पीडनोदकं इति उत्तरीयवस्त्रंतटेनिष्पीड्याचम्यगृहंगच्छेत् मित्राय
नमः वरुणायनमः आदित्यायनमस्कारमिति अर्घ्यपूजामुच्चरितमिति अथ देवपूजा साचनाम मंत्रेण विश्वेश्वरादिजीर्णलिंग
र्चायांस्वस्थापितलिंगादौतुस्पर्शसहिता वाराहे शालग्रामंनस्पृशेत्तुहीनवर्णोवरकंधरे स्त्रीशूद्रकरसंस्पर्शोवज्रस्पर्शोधिको-
मनः शालिग्रामस्फाटिकद्विजंस्थापितलिंगादौस्पर्शरहिता हरतः कार्यः विष्णुधर्मोत्तरे विष्णोस्तुपूजनंकार्यंतदनुध्यानसंयु
तं पाद्ये आदित्यंगणनाथंच देवेंद्रंचयथाक्रमम् नारायणंविशङ्काख्यंमतेचकुलदेवतां निगमः ब्रह्माणंशिवविष्णुंचसूर्यमग्निग
णाधिपं दुर्गांसरस्वतींलक्ष्मींगौरींवानियतःपुमान् मनुः जपस्तपस्तीर्थसेवाप्रपूजाम्यन्त्रसाधनं देवताराधनंचैवस्त्रीशूद्राणां ४
पतनानिषडीति तत्साक्षादर्चनपरं विहीतंभिन्नपरंवा यत्तुमानस्ये सौवर्णीराजतीवापिताम्रीरत्नमयीपिवा शैलीदारुमयीवा-

पिलोहसंघमयीतथा लोहसद्यःपंचधातुरसाः रीतिकाधातुयुक्तावाताम्रकांस्यमयीतथा शूलदारुमयीवापिदेवताचोप्र-
शस्यते अंगुष्ठपर्वादारभ्यवितस्तियावदेवतु गृहेतुप्रतिमाकार्यानाधिकाशस्यतेबुधैः भागवते वैदिकस्तांत्रिकोमिश्र
इतिचत्रिविधोमखः रामार्चनचंद्रिकायांपाद्मे वैदिकोमिश्रिनावापिविप्रादीनांविधीयते तांत्रिकोविप्रभक्तश्चशूद्रस्या-
पिप्रकीर्त्तितः तत्रोपचाराराघ्रवभट्टैःपदार्थादर्शेउक्तः आचारचिंतामणौ सपर्याविविधाप्रोक्तास्तासामेकांसमाश्रयेत्
गंधादिपंचकंचेतिउपचारादशोदिताः अथषोडशोपचाराः आसनंस्वागतंचार्घ्यंपाद्यमाचमनंतथा मधुपर्काचमनकं वसना-
भरणानिच गंधपुष्पेधूपदीपौनैवेद्यंवंदनंतथा अथद्वादशोपचाराः आसनावाहनेचार्घ्यंपाद्यमाचमनंतथा स्नानंव-
स्त्रोपवीतंच भूषणानिचसर्वशः गंधपुष्पेतथाधूपंदीपंनैवेद्यमेवच माल्यानुलेपनंचैवनमस्कारविसर्जने अथषट्त्रिं
शोपचाराः आसनाभ्यंजनेतद्वदुद्वर्त्तनंचविरूक्षणे संमार्जनंसार्थिरादिस्नापनावाहनेतथा पाद्यार्घ्याचमनीयंचस्नानीयंम
धुपर्कको पुनराचमनीयंचवस्त्रयज्ञोपवीतके अलंकारागंधपुष्पेधूपदीपौतथैवच अनुलेपनंसर्वांगेचामरंव्यजनंतथा आ
दर्शादर्शनंचैवनमस्कारोथनर्त्तनं गीतवाद्येवंदनानिस्तुतिहोमःप्रदक्षिणा दंतकाष्ठप्रदानंचदेवपूजाविसर्जनं उपचाराइ
मेज्ञेयाषट्त्रिंशत्स्मरपूजने अन्यत्रापिकाम्यपूजायांचतुःषष्ट्युपचाराभार्गवार्चनदीपिकायामुक्ताः तेग्रंथगौरवभयान्नलि

गा॰ का॰ ५

खिताः ब्राह्मे ब्रह्मांजलग्नं विप्रेभ्यो वैष्णवंच प्रदीयते रुद्रांगुलग्न मग्नौतु दहेत्सर्वंच तत्क्षणात् शिष्येभ्यस्तथ्रदेवेभ्योदत्त प॰ प्र॰ ३
दिनेषु निक्षिपेत् पुष्पपत्रादि निर्णयो नियतकृत्यं दिनकर द्योते ज्ञेयं इति प्रयोगः अथ वैश्वदेवो मार्कंडेय पुराणे
ततस्संपूजयेद्वह्निं दद्याच्चैवाहुतीः क्रमात् प्रथमा ब्रह्मणो दद्याद्द्याद्दद्ह बलिं ततः पर्जन्यांभो धरित्रीणां दद्यात्तु मणकत्रयं वा
यव्ये प्रति दिग्भ्यंश्च प्राच्यादिभ्यो यथाक्रमं ब्रह्मणेचांतरिक्षाय सूर्यायच यथाक्रमं विश्वेभ्यश्चैव देवेभ्यो विश्वभूतेभ्य एवच उ
षसे भूतपतये दद्याच्चोत्तरनस्ततः स्वधानमभ्यस्तथा इतित्यक्त्वा पितृभ्यश्चापि दक्षिणे कृत्वापसव्यं वायव्यां यस्मेतत्तेवमे
जनं ततस्तोयमुपादाय तेषांनाम्नाक्षिपेद्भुवि इति विष्णुपुराणेप्येवं होममुक्त्वा बलौविशेष उक्तः तच्छेषं मणिके पृथ्वी
पर्जन्येभ्यः क्षिपेत्ततः द्वारिधातुर्विधातुश्च मध्येच ब्रह्मणःक्षिपेत् इंद्राय धर्मराजाय वरुणाय तथेंदवे प्रागादिषु बुधो दद्या
द्धुतशेषात्मकं बलिं प्रागुत्तरेचै दिग्भागे धन्वंतरि बलिं विदुः वायव्यां वायवे दिक्षु समस्तात्पुरतो दिशि ब्रह्मणेचांतरिक्षाय-
भानवेच क्षिपेद्बलिं विश्वेदेवा विश्वभूतास्तथ विश्वपतिं पितॄन् यक्ष्माणंच समुद्दिश्य बलिं दद्यान्नलेश्वरे तत्र बलिदानं
गृहदेशेषु कार्यं अग्नग्रे पश्चाद्वा अत्र कात्यायनस्मृतौ निरग्नेर्व्याहृति होमं शाकल होमं चोक्त्वा शेषाद्धुत बलिं हरेत् इति- ५
विश्वदेवोक्तेः शाकलमंत्राश्च देवकृतस्येनेति षट् देवताक नाम्न मंत्रैर्होम इति मदनपालः वस्तुतस्तु पुराणोक्तः अग्निरुक्तो

हेमाद्रौ व्रतकांडे स्त्रीबालशूद्रमूर्खैश्च होतव्यं प्रत्यहं तथा सभ्ये वावसथे वापि न तु कुंडे कदाचनेति बालाद्विजानां मूर्खा वेदा
ध्ययनानधिकारिणोऽनुलोमस्थश्च भागशः सभ्यः श्रोत्रियागारादानीतः आवसथो महानसस्थः कुंडं गृह्याग्निरित्यर्थः अ
थ प्रयोगः दर्भहस्त आचम्य तूष्णीं प्राणानायम्य देशकालौ स्मृत्वा पंचसूनापनुत्तये परमेश्वरप्रीत्यर्थं वैश्वदेवं करिष्ये कुंडहस्त
मितस्थंडिले वा अभ्युक्ष्य लौकिकाग्निं संस्थाप्य अग्नये नमः मुखं यः सर्वदेवानां हव्यभुक् कव्यभुक् तथा पितॄणां च नम
स्तस्मै विष्णवे पावकात्मने इति संपूज्य पर्युक्ष्य गृहान्नेन तंडुलैर्वा आज्यप्लुतैः फलैर्मूलैर्वा होमं कुर्यात् तद्द्रव्यमग्नौ निधाय उ
द्धास्याभ्युक्ष्य पाणिना घृतप्लुतं जुहुयात् पुण्याहुतिर्द्वादशपर्वपूरिका द्रोमलकमात्रा वा अग्नये नमः वायवे सूर्याय प्रजापतये अ
ग्नये इति षट् इति शाकलहोमः अथ पौराणः ब्रह्मणे प्रजापतये गृहाभ्यः कश्यपाय अनुमतये विश्वेदेवेभ्यः अग्नये स्विष्टकृ
त इति ततः पर्युक्ष्य विभूतिं धृत्वा नमः कुर्यात् विज्ञानेश्वरमते देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः स्वाहा
यै स्वधायै नित्यमेव नमो नमः इत्येतेन मंत्रेण होम इति मदनपारिजाते परिशिष्टे शाकं वा यदि वा अन्नं मूलं वा यदि वा फलं
संकल्पयेद्यदा हस्तेनाग्नौ जुहुयादपि व्यासः जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्जितं दध्यक्तं पयसाभ्यक्तं तदभावे भसापि वा
चतुर्विंशतिमते अलाभे येन केनापि फलशाकोदकादिभिः पयोदधिघृतैः कुर्याद्वैश्वदेवः स्रुवेण तु हस्तेनान्नादिभिः कुर्यात्

दरिद्रांजलिनांजले इतिदेवयज्ञः अथभूतयज्ञः मध्येपर्जन्याय अद्भ्यःपृथिवी द्वादशारवर्याः धात्रेविधात्रेनमः प्रति
दिशांदिभ्यः इंद्रायधर्मराजायवरुणायइदं ईशानायधन्वंतरयेवामदेवायब्रह्मणे अंतरिक्षायसूर्याय उत्तरेविश्वेभ्योदेवेभ्यः
विश्वेभ्योभूतेभ्योनमः भूतानांपतयेनमः ततःदक्षिणेप्राचीनावीति पितृभ्यःस्वधानमः इदंपितृभ्यः जलस्पर्शः अथकाति
यः पौराणश्चस्वशब्देनेत्यन्के पात्रंप्रक्षाल्य-वायव्यै यक्ष्मैतत्तेनमइतिनिनयेत् इदंयक्ष्मणे अथदेवताभ्यः पितृभ्यश्चेति व
न्हौसकृद्हुत्वातेनैवबलिस्तेनैव पितृयज्ञइत्येके आचारचूडामणौतु ओंभूःस्वाहेति विप्रेणोक्तेनमोनमइतिस्वयंजुहुयात्
एवंव्यस्तासमस्ताश्च ततोदेवकृतस्यैनसोऽवयजनमसी स्वाहेति विप्रेणोक्तेनमोनमइतिस्वयंहोमः अग्नयेइदं एवंवषट्
ततोयमायस्विष्टकृतेच भूमौविश्वेभ्योदेवेभ्यः सर्वेभ्योभूतेभ्योनमः पितृभ्योनमइति दक्षिणेप्युक्तं शेषमादायगृहांगणेप्रोक्ष्य
द्वौश्वानौश्यामशबलौ वैवस्वतकुलोद्भवौ ताभ्यांपिंडंप्रदास्यामिस्यातामेतावहिंसकौ श्वभ्योनमः इतिदत्वा पुनरादाय ऐंद्रवरु
णावायव्याः सौम्यायनैर्ऋतास्तथा वायसाप्रतिगृण्हंतु भूमौपिंडंमयार्पितमिति काकबलिंदत्वा इदंवायसेभ्यः इत्युक्त्वापुन
रादाय विष्णुपुराणोक्तमंत्रैः बलिंदद्यात् यथा देवामनुष्याः पशवोमनुष्याः सिद्धाः सयक्षोरगदेवताद्याः प्रेताः पिशाचाः
पशवः समस्तायेचान्नमिच्छंतिमयाप्रदत्तइदंदेवादिभ्यः पिपीलिकाः कीटपतंगकाद्याबुभुक्षिताःकर्मनिबद्धबद्धाः प्रयांतुतेतृ

त्तिमिमं मयान्नं तेभ्यो विसृष्टं सुखिनो भवंतु इदमनाथबंधुभ्यः भूतानि सर्वाणि तथा न मेतदहं च विष्णुर्न ततथान्यदस्ति तं
स्मादहं भूत निकाय भूतमन्नं प्रयच्छामि भवाय तेषां इदं भूतेभ्यः चतुर्दशो भूतगणो य एवं तत्र स्थिता ये खिल भूत संघाः तृप्त्यर्थ-
मन्नं हि मया विसृष्टं तेषामिदं ते मुदिता भवंतु इदं भूतगणाधिपेभ्यः इत्युच्चार्य नरो दद्यादन्नं श्रद्धा समन्वितं भुवि भूतोपकाराय
गृही सर्वाश्रयो यतः श्वचांडालविहंगानां भुवि दद्यान्नरोत्तमः ये चान्ये पतिताः केचिदपुत्राः सुविमानवाः ततो गोदोहमात्रं वै कालं तिष्ठे
दृहांगण इति ततः काकादिपतित तथा परोगीभ्य पचादिभ्यो दद्यादिति पंचयज्ञादि वैवेत्याह जमदग्निवाक्यादिच्चैव अथ नित्य
श्राद्धं तत्पृथक् कार्यं अथवा पितृयज्ञः स्यात् पित्र्यो बलिर्यथापि वेति छंदोगपरिशिष्टात् मनुः-- एकमप्याशये द्विप्रं षण्णामप्य
न्वहं गृही नाभिमंत्रण होमश्च नावाहन विसर्जनेन पिंडदानं च तथा नित्ये कुर्याद्द्विजोत्तमः दक्षिणं स्वधाकार विश्वेदेवानां विकल्पः
अथ प्रयोगः आचम्य देशकालौ स्मृत्वा नित्यश्राद्धं करिष्ये इत्युक्त्वा अस्मत्पितृ पितामह प्रपितामहानां अमुक गोत्राणाममुक
नाम्नां एवं मातामह मातुः पितामह मातुः प्रपितामहानां सपत्नीकानां स्थाने क्षणः कर्त्तव्य इति क्षणं दत्वा पितरो मातामहाश्च इ
दं वः पाद्यमिति पाद्यं दत्वाचम्यो दङ्मुखः कुशासने उपविश्य पितरो मातामहाश्चैव वो गंधः इमानि पुष्पाणि धूपदीप आच्छादनं चेति
दत्वा पूर्णतां वाचयेत् द्विगुणमामान्नमनुकल्प्य प्रोक्ष्य पात्रमालभ्य तिलान् विकीर्य अन्नं गृहस्त्वा पितरः मातामहाश्च देवताः इदं

गा·क·प्र वः आमान्नं त्रिगुणं वासोपस्करगयेयं भूर्गदाधरो विभुः ब्रह्मरूपमिदं पितृभ्यो मुकगोत्रेभ्यो मुकनामभ्यो वसुरुद्रादित्यस्वरूपेभ्य प·प्र·
७ स्तथ्यमाता महादिभ्यश्च स्वधा संपद्यतांनमः दत्तमक्षय्यमस्तु शिवा आपः सौमनस्यं अक्षतं पितरः दीर्घमायुरस्तु स्वस्ती ब्रूत पितृ ३
णां यद्दत्तं तदक्षय्यमस्तु दक्षिणां दत्वा वा एतावदशक्तौ पित्र्यबलिनैव नित्यश्राद्धसिद्धिः इति नित्यश्राद्धं अथ मनुष्ययज्ञः
स चातिथिपूजनरूपः स च नित्यश्राद्धस्यांगमिति हेमाद्रौ बृहस्पतिः प्रीयेत स्वागतेनाग्नि रासनेन शतक्रतुः पितरः पादशौचेन प्रज
नेन प्रजापतिः याज्ञवल्क्यः अध्वनीनोतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः नैव पृच्छेच्च तं गो
त्रं देशनामकुलं श्रुतं अध्वनोभ्यागतं विप्रं भोजनार्थमुपस्थितं विष्णुपुराणे दिने तिथौ तु विमुखे गते यत्पातकं नृणां तदेवाष्ट
गुणं पुंसां सूर्योपि विमुखे गते सूर्यास्त इत्यर्थः विष्णुपुराणे इष्टो वा यदि वा द्वेष्यो मूर्खः पंडित एव वा संप्राप्ते वैश्वदेवांते सोतिथिः
स्वर्गसंक्रमः आतिथिकं पाद्यार्घादिभिः संपूज्य तस्मै सनकादिमनुष्येभ्यो नमः इत्युक्त्वा मान्नं दद्यात् ततो गोग्रासः मदनपारिजा
ते ऋष्यशृंगः गवां ग्रासं च कुर्वंति नित्यमेव समाहिताः गवां कंडूयनं स्पर्शो ग्रासमाह्निकमेव च मंत्रस्तु सौरभेयाः सर्वहिताः पवित्रा
पापनाशिनीः प्रतिगृह्णंतु मे ग्रासं गावस्त्रैलोक्यमातरः सुरभिस्त्वं जगन्माता देवी विष्णुपदे स्थिता ग्रासं गृहाण मे दत्तं गोमात ७
स्त्रातुमर्हसि पंचभूते शिवे पुण्ये पवित्रे सूर्यसंभवे प्रतीच्छ मे मया दत्तं सौरभेयि नमोस्तु ते इति वा अथ भोजनं बालवृद्धगर्भि–

ण्यातुरस्त्रीबालवृद्धादीन्संभोज्य पाणिपादंप्रक्षाल्य द्विराचम्य शुचौदेशेरहसिचतुरस्रंपंचसप्तमंडलिककांस्यस्याधःकंठभाज
नायवै गृहस्थैस्तु तदाकार्यमभावेहि मरूप्ययोः इतिअत्रिवाक्योक्तं अशक्तःपत्रावलिरूपंवासंस्थाप्य त्रिकोणंवातत्रभोजनपात्रंस्थाप
येत् तत्रपश्चिविष्टपात्रंप्राङ्मुखोमौनी घृताक्तंप्रोक्ष्य धर्मराजायनमः चित्रगुप्तायनमः प्रेतेभ्योनमः इतिबलिंदक्षिणतोदत्वा सुखंभुंजीया
त् नोच्छिष्टंग्राहयेत् यथाज्यंजःध्वांक्षिष्टेनसंत्यजेत् भोजनंतुननिःशेषंकुर्यात्प्राज्ञःकथंचन अन्यत्रदध्नःक्षीराज्यक्षौद्रसक्तुभ्यएवच उ-
च्छिष्टभागधेयेभ्यश्चोदकंनिर्वपेद्भुवि भोजनांतेपुनर्जलंप्राश्ययस्मादन्नदुच्छिष्टशेषमादाय भूमौदत्वातत्रोदकंसिंचेत् ततोमुखंपाणिपादंप्रक्षा
ल्यद्विराचम्यजानुनीस्पृष्ट्वापुनराचम्य अगस्तिरग्निर्वडवानलश्च भुक्तंमयान्नंजरयंत्वशेषं सुखंममैतत्परिणामसंभवंयच्छंत्वरोगंममवासुदे
वः अगस्तिंकुंभकर्णंचशनिंचवडवानलं आहारपरिणामार्थंस्मरामिचवृकोदरमिति उदरंसंमृज्य तांबूलंप्राश्य पुराणश्रवणादिनाहःशेषंन
येत् ततोरात्रौरविपर्वसंक्रमणव्यतिपातवैधृतिश्राद्धदिन पूर्वरात्रौनद्वितीयवारंभुंज्यात् कामात्तुरंअगस्तयेनमः माधवायनमः मुकुंदायन
मः अस्तिकायनमः इतिनत्वा प्राच्यांदक्षिणतोवाशिरःकृत्वास्वपेत् इदमाह्निकंप्रत्यहंकुर्यात् इतिश्रीगागाभट्टकृतेकायस्थधर्मदीपिका
ह्निकप्रयोगः ७ ७ ७ श्रीचंद्रसेननृपतेःप्रभूवुवंशे वंशप्रसिद्धमतयःप्रभुरामधेयः कायस्थइत्यभिदधुस्त्वभिधांनदानींस्तत्रांतकारिजमद
ग्निसुतप्रसादात् तदन्वयेप्रादुरभूद्गुणाढ्योरामाभिधःसर्वलिपिप्रवीणः तदात्मजःश्रीहरवाजिवर्माप्रभूकुल्यावैकिलचित्रगुप्तः तदात्मजश्चापाजि

गा·का· नामधेयः स्वजातिधर्माचरणानुरक्तः श्रीरुक्मिणीतन्महिषीप्रगल्भाबल्लाळवर्माणमसूतसूनुं बल्लाळःप्रभुरेषसर्वविद्रापिविद्वान्नः कृपाभाजनंस प्र·
८. वानंदकरस्वजातिविहीताचारेकनिष्ठः सुधीः लिप्यासर्वमनोज्ञयासमभवद्यश्चित्रगुप्तोपरः स्वाचारस्यनिबंधनंनिजकुलेचक्रेबुधैःसमतं ४ ब्र २
ह्मांडखंडदेडोक्तश्रीबल्लाळशुभेच्छया कायस्थधर्मदीपोयं धर्मान्कायस्थवंशजान् ५ प्रकाशयंतुलोकेषुध्वस्तां धर्मस्यपद्धतिं कायस्थधर्म :
दीपेनकायस्थाःस्वकुलोचितान् धर्मान्पश्यंतिसततंधर्माचरणतत्पराः ६ इतिविविधविचाराचारसंचारनिष्ठैः सकलगुणवरिष्ठैः पंडितैर्निर्मितोयं प्रभुज
निजधर्मोद्दामशर्मप्रकाशः प्रकटसुकृतमार्गोकारिबल्लाळनामा ७ कायस्थानांसुकृतंचरितेब्राह्मणानांविवादोलोपामुद्रापरिदृढकं
भागभाजोबभूव साक्षान्नारायणइवशिवोयत्रदेदोस्तितत्रज्ञातुंधर्मोद्भुतगतिमथोवाडवानांगणोगात् ८ सर्वज्ञतानिलयतालयमा
नसोपिवाग्देवतायतनमंबुमुखांबुजोपि विख्यातसापयितुमेवसदाबुधानांकाशिस्थपंडितजनप्रजसाश्चकार ९
प्रकारयतुलोकेषुध्वस्तासिध्धांतपद्धतिः कायस्थधर्मदीपेनकायस्थाःस्वकुलोचितान् धर्मान्पश्यंतुसततंधर्माचरणतत्पराः इतिविविध
विचाराचारसंचारनिष्ठैःसकलगुणवरिष्ठैःपंडितैर्निर्मितोयं प्रभुजननिजधामोद्दामशर्मप्रकाशः प्रकटसुकृतमार्गोकारिबल्लाळनामा ११ सिंदूरं
नयनंतृतीयमं शशिश्यामंगलंकज्जलंस्वच्छांगंमुकुरंनिशाकरकलामाभुग्नरक्तस्रजं गंगांबुनिनिबद्धपिंगळजटापेट्टास्थितामालती बिभ्रो ८
णोगिरिजासहानिशमसौदेवःशिवायास्तुवः ॥ ॥ इतिगागाभट्टकृतकायस्थपद्धतिसमाप्ता ॥ ॥मितिचैत्रसुद्ध १५ शके१७९४॥ ॥

हा ग्रंथ श्रीमंत राजश्री भास्करराव विठ्ठल बाबासाहेब दिवाणजी, व श्री॰ सदाशिवराव देवाजी दादासाहेब मुकाम बडोदें यांणीं व श्री॰ रा॰ बळवंतराव शिवराम देसाई मुक्काम मुंबई यांणीं मुख्यत्वें आश्रय दिल्यावरून मुंबईंत "जगदीश्वर" छापखान्यांत परशुराम रघुनाथ शास्त्री घगवे व नारायण जनार्दन कातरणे यांणीं छापून प्रसिद्ध केला, शके १७९४ माहे पौष मास

## याग्रंथास आश्रय देणारांचीं नावें.

| नांवें | प्रति | नांवें | प्रति | नांवें | प्रति |
|---|---|---|---|---|---|
| **बडोदें.** | | श्री॰ रा॰ सदाशिवराव देवाजी दादासाहेब दिघे॰ | १० | श्री॰ रा॰ कृष्णाराव विठ्ठल भाऊसाहेब दि॰ | २ |
| श्री॰ रा॰ भास्करराव विठ्ठल बाबासाहेब दिवाणजी॰ | २५ | ,, ,, आनंदराव आबाजी किहीमकर | ५ | श्री॰ रा॰ बळवंतराव यशवंत | २ |
| | | ,, ,, गोविंदराव लक्ष्मण शिंदकर | ३ | श्री॰ रा॰ देवराव गोविंद द्विघे | २ |

| | |
|---|---|
| रा॰ रा॰ वामनराव गोपाळ चिंचघरकर | २ |
| ,, ,, गणपतराव सखाराम वाकसकर | १ |
| ,, ,, नारायण राव नामराव | १ |
| ,, ,, मोतीभाई विनायकराव | १ |
| ,, ,, रघुनाथराव नारायण कर्णीक | १ |
| ,, ,, गोपाळराव बाबाजी शिंदकर | १ |
| ,, ,, अमृतराव कृष्ण गडकरी | १ |
| ,, ,, रामचंद्र भैरव येसवीकर | १ |
| ,, ,, शिवराव रामचंद्र चिंचघरकर | १ |
| ,, ,, लालजी लाडोपारकर | १ |
| ,, ,, गोपाळराव गोविंद नके कर | १ |

| | |
|---|---|
| रा॰ रा॰ बाबाजी गणेश माहाडकर | १ |
| ,, ,, यादवराव रमाकांत फणशे | १ |
| ,, ,, गोविंदराव अमृत वाडेकर | १ |
| ,, ,, दामोदर बल्लाळ कृष्ण पनवेलकर | १ |
| ,, ,, शंकरराव कृष्ण | १ |
| ,, ,, अनंतराव आपाजी | १ |
| ,, ,, मार्तंडराव नारायण पारकर | १ |
| ,, ,, वासुदेव शिवराम दवके कर | १ |
| ,, ,, रामचंद्रराव वामन मुरमाडकर | १ |

| | |
|---|---|
| रा॰ रा॰ यशवंतराव बळवंत वाकीकर | १ |
| ,, ,, माधवराव नारायण हरणीकर | १ |

## मुंबई.

| | |
|---|---|
| श्री॰ रा॰ बळवंतराव शिवराम देसाई | ५ |
| रा॰ रा॰ मोरोबा जगन्नाथ मोहिले | २ |
| श्री॰ रा॰ नारायणराव बळवंत भिसे | १ |
| रा॰ रा॰ निळोबा गणपतजी चौबळ | १ |
| ,, ,, गणपतराव आबाजी करणीक | १ |

| | |
|---|---|
| रा॰ रा॰ बाबाजी काशिनाथ कर्णीक | १ |
| ,, ,, विनायक आत्माराम मोहिले | १ |
| ,, ,, अनंदराव बापूजी लिखिते | १ |
| ,, ,, मल्लनाथ बाबुराव कामत राईकर | १ |
| ,, ,, केशव शिवराम भांडारी | १ |

## डाहाणु.

| | |
|---|---|
| रा॰ रा॰ आबाजी भास्कर दवणे | १ |
| ,, ,, बजाबा कृष्ण नाचणे | १ |
| ,, ,, रामचंद्र भगवंत दिक्षीत | १ |

## मांहीम.

रा. रा. बळवंतराव आपाजी शृंगारपुरे ............ १

## धर्मपूर.

श्री. रा. भगवंतराव बाबाकर्णीक ...... ६

## वसई.

रा. रा. आत्माराम बळवंत वकील ...... १
" " दामोदर कृष्णा गुप्ते ...... १

## ठाणें.

रा. रा. आत्माराम कृष्णा गुप्ते ...... १
" " नारायण कृष्ण धारकर ...... १
" " शिवराम गोपाळ देशमूख ...... २
" " गोपाळराव रावजी देशपांडे ...... १
" " नारायण भास्कर ...... १

## सूरत.

श्री. रा. आपाजी रामचंद्र मेंडेकर दप्तरदार ...... ४

## पुणें.

रा. रा. विनायक विठ्ठल गुप्ते चिटणीस ...... ३
" " समाहाडकर मा. डे. गाझर, पेनशनर ......
रा. रा. अनंत खंडेराव दिघे, पौडकर, पेनशनर ...... १
" " केशवराव रामचंद्र गुप्ते माम. क. ...... १
" " खंडो राजाराम पाटणकर. पेन. ...... १
" " गणेश सखाराम चिटणीस का. स्टांप. हर्पीस. ...... १
" " दाजी धोंडदेव पाटणकर का. रि. ...... १
" " परशुराम बापूजी टिपणीस. ...... १
" " बाळकृष्ण आपाजी तळोजकर ...... १
" " शिवराव बाबाजी दिघे.
" " नारायण माहादेव प्रधान
" " नारायण सदाशिव स्कुडे.
" " वामन सिताराम लिखिते
" " विठ्ठल गंगाधर दिघे ...... १

